The Parimala of Appaya Dikshita generally treats of select passages from Kalpataru which deserve special examination. But this Abhoga expounds not only each and every noteworthy feature of of Kalpataru but also the important portions of Bhamati that could be understood only by special exposition. Thus it is clear that Kalpataru can be understood fully and correctly only by a study of both Parimala and Abhoga. Further this Abhoga helps us a great deal in arriving at the correct readings of Kalpataru. The figures given in the margin of this book indicate the pages of the Kalpataru in our edition of the Pancha Granthi. We are greatly indebted to Pandit S. Subrahmanya Sastri of Tanjore who has, with his usual love for the spread of our ancient Sanskrit Literature, undertaken the arduous task of editing this work with the help of this single manuscript. We are sure the Sanskrit scholars all over the country would welcome this rare work and appreciate highly its value as a help to the right understanding of Kalpataru.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ आभोगः ॥

दैत्येन्द्रं वरदर्पितं सरभसं भित्त्वाट्टहासे कृते
  दृष्ट्वा यं कमलालया कुशलिनं जैत्रश्रियालंकृतम् ।
संहृष्टा परिषस्वजे सुरगणैः संस्तूयमानं विभुं
  तं लक्ष्मीकुचकुङ्कुमाङ्कितनुं लक्ष्मीनृसिंहं नुमः ॥ १ ॥

महीधरकुलोत्तंसो रामाम्बागर्भसंभवः ।
लक्ष्मीनृसिंहस्तनुते कल्पवृक्षप्रदीपिकाम् ॥ २ ॥

क कल्पकतरुर्दिव्यो दुरालोको दुरासदः ।
मादृशैश्चर्मचक्षुर्भिर्मन्दप्रज्ञैस्तथापि तु ॥ ३ ॥

आसाद्य कल्पकतरुं दिशा परिमलोक्तया ।
आलोक्य भक्तिचक्षुर्भ्यामाभोगोऽयं प्रकाश्यते ॥ ४ ॥

आचार्यैश्चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तये शिष्टाचारपरिपालनाय च कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नतस्य शास्त्रस्य विषयादिकं दर्शयति— यदज्ञातमिति । १ तत्परमं ब्रह्म प्रत्यग्रूपेण वर्तमानं नमस्याम इत्यन्वयः । ननु सकलप्रपञ्चाश्रयस्य ब्रह्मणः कथं तद्विरुद्धकर्तृभोक्तृजीवरूपतेत्याशङ्क्य विरुद्धधर्माणां मिथ्यात्वं बहुविधेत्यादिना दर्शितम् । बहुविधस्य नानारूपस्य वियदादेः साधारणस्य कर्तृत्वादेस्तत्तद्भावासाधारणस्य च जगतो विभ्रमस्य विभ्रममात्रसिद्धस्य धरं धारकं कल्पितं जीवैरित्यर्थः । प्रकाशमाने ब्रह्मणि कथं जगदारोप इत्यत उक्तमज्ञातमिति । एवमपि नीरूपे ब्रह्मणि कथं जगदारोप इत्यत उक्तं वियदिति । यद्वद्यथा वियदज्ञातं सद्बालैस्तत्स्वरूपमजानानैस्तलमलिनतायोगि कल्पितम् अनाद्युपश्याममहाकटाहत्वेन ज्ञातं तद्वद्ब्रह्माप्यज्ञातं जीवनिष्ठाज्ञानविपर्याकृतं सज्जगदधिष्ठानत्वेन ज्ञातमित्यर्थः । प्रत्यग्रूपस्य ब्रह्मणः सदादिरूपेण ज्ञायमानत्वादज्ञातत्वमसिद्धमित्यत उक्तमुन्मुद्रेति । उन्मुद्रमुपाधिविशेषानवच्छिन्नं ज्ञानं प्रततमपरिच्छिन्नं सुखं तद्रूपं यद्रूपं चेत्यर्थः । तथा च ब्रह्मणः सदादिरूपेण भानेऽपि यथोक्तरूपेणाज्ञातत्वमविरुद्धमिति भावः । उक्तरूपे ब्रह्मणि प्रमाणं दर्शयितुं श्रुति-

शतेत्याद्युक्तम् । श्रुतीनां यानि शतान्यपरिमितानि शिरांसि वेदान्तास्तैः प्रकटितं प्रकाशितमित्यर्थः । नमस्कारश्च प्रत्यगभेदानुसंधानम्, निर्विशेषब्रह्मणि नमस्कारक्रिया-कर्मत्वानुपपत्तेः । अत्र पूर्वार्धे अज्ञातत्वविपर्यस्तत्वाभ्यां ब्रह्म शास्त्रस्य विषयो निर्दिष्टः; जगत्कारणत्वं च तल्लक्षणमुक्तम्; प्रपञ्चस्य कल्पितत्वेन मिथ्यात्वाज्जीवब्रह्माभेदाविरोधश्च दर्शितः । उत्तरार्धे अखण्डानन्दस्फूर्तिः प्रयोजनम्, ब्रह्मणि वेदान्ताः प्रमाणम्, वेदान्तानां ब्रह्मण्येव समन्वय इति च दर्शितम् ॥ १ ॥ प्रतीचो यथोक्तब्रह्मरूपस्फूर्तिरपि दक्षिणामूर्त्यु-पासनाधीना 'अजात इत्येवं कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्यम्' इति श्वेताश्वतरोपनिषच्छ्रुतेरिति मनसि निधाय 'नान्दीश्लोको विधातव्यश्चन्द्रनामाङ्क एव

३ सः' इति शास्त्रानुरोधेन चन्द्रत्वेन रूपयन्दक्षिणामूर्तिं नमस्करोति— **बोधेति** । अत्र शंकर-मित्यनेन मुक्तिसुखप्रदत्वं दर्शितम् । संसारेत्यादिविशेषणेन च मुक्त्युपपादकतयानर्थनिवृत्तिर्द-र्शिता । तदर्थश्च– संसारोऽहंममाध्यासलक्षणः, स एव सहस्ररश्मिस्तापकत्वसाम्यात्, तज्जनिताः क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशाख्याः, तन्निवर्तकमिति । सोम इति श्लिष्टरूपकेण उमास-हायत्वापरित्यागेनैव चन्द्रत्वेन रूपणं कृतम्, उमाया ब्रह्मविद्याप्रदत्वस्य 'तत्राकाशे स्त्रिय-माजगामोमां हैमवतीं बहु शोभमानाम्' इति तलवकारिणामुपनिषदि प्रसिद्धत्वात् 'उमास-हायम्' इति श्रुत्या तत्सहितस्यैव ध्येयत्वश्रवणाच्च । प्रसिद्धे चन्द्रे किरणसहस्रैर्व्योमगततति-मिरनिवर्तकत्वं समुद्रवृद्धिहेतुत्वं च प्रसिद्धम् । योगिचिन्त्यत्वं च तस्य द्विजराजतया तदु-पास्यत्वात् अर्चिरादिमार्गमध्यवर्तिचन्द्रलोकाधिपतित्वेन तत्रत्यैर्योगिभिरुपास्यत्वाच्च । अत-श्चन्द्रत्वरूपणोपयोगितया शंकरेऽपि तद्धर्मान्दर्शयितुं बोधत्यादिविशेषणानि । बोधैस्तत्तद्वे-दान्तवाक्यश्रवणजन्यैस्तत्तदन्तःकरणवृत्त्यवच्छेदकृतभेदैश्चित्स्वरूपैरेवाभांशुशतैः किरणशतैः हृ-देव व्योम तद्गतमबोधतिमिरं स्वरूपाज्ञानान्धकारं दारयन् । अनेन श्रवणमुक्तम् । प्रज्ञा ऊहापोहकुशला बुद्धिः, सैव वारिधिः, तमुन्नतिं प्रापयन्नित्यर्थः । अनेन मननमुक्तम् । सदोदितेत्यनेन प्रसिद्धचन्द्राद्विशेषोक्त्या व्यतिरेकोऽपि दर्शितः । निर्मलयोगिचिन्त्येत्यनेन निदिध्यासनमुक्तम् । तदनेन मुमुक्षुणा श्रवणादिभिर्दक्षिणामूर्तिरूपमुपास्यमित्युक्तं भवति ॥ २ ॥ श्रीनृसिंहस्य बन्धनिवर्तकत्वम् 'आत्मबन्धहरः' इत्यादिश्रुतिसिद्धमिति मोहनिवर्तनेन तस्यैव

४ प्रत्यग्रूपेणाविर्भावं प्रार्थयते— **मायेदिति** । मायन्प्रपञ्चरूपेणाजृम्भमाणो यो मोहो मूलाविद्या, स एव मदेभः, तस्य कुम्भौ आवरणविक्षेपांशौ, तयोर्दलनं सम्यगनुष्ठितैः श्रवणादिभिरसंभावनाविपरीतभावनानिवृत्त्या शिथिलीकरणम्, तेन प्रोद्भूतः संजातो निर्दुष्ट-मुक्ताफलसदृशः; अथ वा सन् सत्यवस्तुविषयकत्वात् मौक्तिको मुक्तिप्रयोजनको यो शान्तो-ऽखण्डाकारवृत्तिरूपो भक्तजनसमेतैः, तेनालंकृतं सावलामाविद्यानवृत्त्याभिव्यक्त सत्सुखा-द्वयं वपुः स्वरूपं यस्येत्यर्थः । इतरदेवतापेक्षया श्रीनृसिंहस्य भक्तजनवात्सल्य सर्वान्तर्याम-त्वप्रकटनं च विशेषं दर्शयन्नाह— **प्रह्लादेति** । प्रह्लादोक्ता या गीः 'त्वय्यस्ति भगवा-न्विष्णुर्मयि चान्यत्र चास्ति सः' इत्यादिरूपा, तस्याः प्रमाणनं प्रामाण्यसंपादनम्, तदेव विधिः कार्यं तदर्थमित्यर्थः । 'चर्माणि द्वीपिनं हन्ति' इत्यादिवन्निमित्तसप्तमी । श्रीनृसिंहस्यैव जीव-रूपेण प्रविष्टत्वात्प्रकटीभवनं सिद्धमिति कथं तत्प्रार्थनमित्याशङ्क्य सदादिरूपेण प्रकटने नि-

द्वंऽपि निष्प्रपञ्चाखण्डसच्चिदानन्दरूपेण प्रकटनं प्रार्थ्यत इत्यखण्डितमिति क्रियाविशेषणेन दर्शितम् ॥ ३ ॥ ग्रन्थनिर्माणसामर्थ्याय सरस्वतीं नमस्करोति— **ललितैरिति** । अत्र वर्णसमूहरूपपदविन्यासानां पदविन्यासैरित्यनेन निर्दिष्टानां पुनरावृत्तेन तेनैव पदेन चरणविन्यासत्वेन विद्वद्वदनानां रङ्गस्थलत्वेन वेदाविरुद्धानां शास्त्राणां वेदानां च वाद्यत्वेन रूपणाच्च सरस्वत्या नर्तकीरूपत्वं गम्यम् ॥ ४ ॥ स्वाभिलषितसर्वार्थसिद्धये सर्वाभीष्टप्रदत्वेन प्रसिद्धं गणेशमपि नमस्करोति— **भजमानेति** । भजमानानां सेवमानानां तत्तत्कार्येषु प्रसक्ता विघ्ना एव भित्तयः, तासां प्रभित्तिः प्रभेदनसाधनकुद्दालः । करणे क्तिन्प्रत्ययः । न तु भावे, 'विदारणे भिदान्यत्र भित्तिः' इति शाब्दिकसंकेतात् । तमिवेत्यर्थः । महागणेशमिति महत्त्वविशेषणेन दशभुजस्य महागणपतेर्वामाधःकरेण स्वविषाणधारणस्य शुण्डाग्रस्थितकलशस्थितरत्नवर्षेण भक्तेभ्यः सकलसंपत्प्रदानस्य च मन्त्रशास्त्रप्रसिद्धत्वात्स एवोपास्य इति सूचितम् ॥ ५ ॥ चिकीर्षितग्रन्थप्रतिपाद्यत्वनिश्चयाय व्यासाचार्यौ श्लोकद्वयेन नमस्करोति— **यन्न्यायेति** । यस्य व्यासस्य न्यायसूत्रैर्ग्रथिता आत्मबोध एव सौरभ्यं तद्गर्भा वेदान्तवाक्यपद्ममालेत्यर्थः ॥ ६ ॥ भगवत्पादः श्रीशंकराचार्यः ॥ ७ ॥ 'यस्य देवे परा भक्तिः' इति शास्त्रमनुसरन्गुरुपरमगुरुविद्यागुरुक्रमेण नमस्करोति— **स्वयंप्रभेत्यादिना** । स्वप्रकाशसुखरूपं ब्रह्मैव भक्तानुग्रहाय दयया स्वीकृतशरीरं सदन्वर्थानुभवानन्दपदप्रतिपाद्यमित्यर्थः ॥ ८ ॥ **विद्येति** । विद्या ब्रह्मविद्या, तदुपायः प्रश्रयो विनयः, संयमश्च, धारणाध्यानसमाधित्रयमेकवस्तुविषयं संयमः; तथा च योगसूत्रम्— 'त्रयमेकत्र संयमः' इति । शुभफलाः परमपुरुषार्थफलाः ॥ ९ ॥ **ग्रन्थेति** । सुखप्रकाशाख्यं शशिनं विद्यागुरुं नौमीत्यन्वयः । प्रसिद्धे चन्द्रे उदयमात्रेण कुमुदमुकुलविकासकत्वं ततो बहिर्निर्गमनेन स्वरूपप्रकाशनाख्यव्याक्रियामात्रेण तमोनिवर्तकत्वं ततः सकलकिरणपरिपूर्णस्य गोशब्दवाच्यैः स्वकिरणैस्तारकशब्दवाच्यप्रोद्यन्नक्षत्रदीप्तिमदखण्डाकाशप्रकाशकत्वं च प्रसिद्धम् । तान्धर्माञ्शशित्वरूपणोपयोगितया गुरौ दर्शयति— **ग्रन्थेत्यादिना** । ग्रन्थानां ग्रन्थयः कठिनभागाः तन्नामका मुकुलाः, अनभिव्यक्तत्वसाम्यात्, यस्य गुरोरुदये संनिधाने सति स्फुटीभवन्ति, यत्र गुरौ व्याकुर्वत्यपि व्याख्यानमारभमाणेऽपि लोकस्य मोहाख्यं तिमिरं संशाम्यति, यस्य गोभिर्वाग्भिः परमं व्योम ब्रह्म नीराज्यते शिष्येभ्यः प्रकाश्यते । कथमिव ? प्रोद्यत्तारकदिव्यदीप्ति यथा तथा । दिवि हार्दाकाशे भवा दीप्तिरखण्डाकारवृत्तिः, सैव तारिकेति कर्मधारयः । 'पुंवत्कर्मधारय—' इति सूत्रेण पुंवद्भावः । प्रोद्यन्ती सविलासाविद्यानिवर्तनेनोज्जृम्भमाणा तारका दिव्यदीप्तिर्यस्मिन्कर्मणीति बहुव्रीहिः । तथा च शिष्याणामुपदेशकाल एव तन्महिम्ना विनैव मननादिकमुदेति साक्षात्कार इति भावः ॥ १० ॥ स्वव्याख्येयग्रन्थगौरवप्रकटनाय तत्कर्तारं स्तौति— **वैदिकेति** । नयैर्न्यायैर्विजिताः प्रतिवादिनो दैत्या येनेत्यर्थः । 'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति श्रुतिप्रसिद्धं सकलवेदान्तप्रतिपाद्यसच्चिदानन्दाद्वितीयब्रह्मप्रद्वेषिणां वाद्यन्तराणां दैत्यत्वम् । विबुधेश्वरा विद्वच्छ्रेष्ठाः तेषामाचार्यः स्वकृतग्रन्थव्याजेन तत्त्वोपदेशात्पूर्वाचार्यैः सुरक्षितं वैदिकमार्गं तत्कालसमुद्यदुद्दामदुर्वादिदैत्यविजयेन वेदुपजीविनां सुराणां मार्गं विबुधेश्वरस्य देवेन्द्रस्याचार्यो बृहस्पतिरिव सद्योऽपि सुरक्षितं चक्रे यः स जयती-

त्यर्थः ॥ ११ ॥ अपेक्षितसकलार्थप्रदत्वेन कल्पवृक्षतया रूपयंश्चिकीर्षितं ग्रन्थं प्रतिजानीते— **रूढोऽयमिति**। वेद एव काण्डो जलधिजलम्, तस्माद्रूढ उत्पन्नः, नयमया न्यायमया विटपाः शाखा यस्य सः। वृक्षे बहुषु विटपेषु वीनां पक्षिणां चारेण संचारेण भूरिशाखाविचारत्वं प्रसिद्धम्, तदत्रापि दर्शयति— **भूरीति**। भूर्यः शाखा वेदभागाः, तेषां विचारो मीमांसा यस्य सः, सन्तः शोभना असाधुत्वादिदोषरहिता वर्णाः पदादिरूपा अनन्तानि पर्णानि यस्य सः, समुदितः समुत्पन्नः परमब्रह्मबोधः अखण्डाकारा वृत्तिरेव प्रसूनं यस्य सः। ब्रह्मभावस्यात्रफलस्य हस्तप्राप्यत्वं स्वरूपत्वेन संनिहितत्वात्। जीवविश्वेशौ जीवपरमात्मानौ वीन्द्रौ पक्षीन्द्रौ प्रतिपाद्यौ यस्य सः। संसार एवार्कः, तदुत्पन्नास्तापा आध्यात्मिकादिदुःखानि, तदुपशमनसमर्थः। तादृशः कल्पवृक्षस्तन्यत इत्यर्थः। **श्रीमदिति**। शरीरमेव शरीरकम्। कुत्सितार्थे कप्रत्ययः। तन्निवासी शारीरको जीवः, तमधिकृत्य प्रवृत्तो विचारो मीमांसा। तस्याः श्रीमत्त्वं शब्दसारल्यमर्थगाम्भीर्यं न्यायदार्ढ्यं श्रुतिस्मृतीतिहासपुराणानामैककण्ठ्यं च। तत्र श्रीशंकरभगवत्पादकृतभाष्यरूपाया एव नान्यासामिति तेन विशेषणेन तासामनुपादेयत्वं सूचितम्। तद्व्याख्याया इत्यर्थः। समाप्त्यादीत्यादिपदेन प्रचयगमनमुक्तम्। प्रतिजीवमविद्याभेदाभ्युपगमाद्दीकायामविद्याद्वित्वोक्तिरयुक्तेत्याशङ्क्य प्रत्येकजीवाभिप्रायेणेत्याशयेनाह— **एकेति**। ननु ब्रह्मणो वियदाद्याकारेण विवर्तमानत्वे स्वरूपविलयापत्तिरित्यत आह— **अतत्त्वत इति**। मृत्पिण्डादेरिव तत्त्वतोऽन्यथाभाव एव स्वरूपविलयो न तु रज्ज्वादेः सर्पादिभाववदतत्त्वतोऽन्यथाभावेऽपीति भावः। तत्प्रतिबिम्बत्वेन ब्रह्मप्रतिबिम्बत्वेन। यद्यपि टीकाकारेण जीवानां प्रतिबिम्बत्वं नेष्यते अवच्छिन्नस्यैव जीवत्वसमर्थनात्, तथापि प्रतिबिम्बपक्षोऽपि संभवतीति सूचयितुं तथा व्याख्यातम्। जीवानां ब्रह्मविवर्तत्वे मिथ्यात्वापत्त्या मोक्षानुपपत्तिरित्यरुचेराह— **अथ चेति**। श्रुत्यादिषु भौतिकानां हिरण्यगर्भस्रष्टृत्वकीर्तनात्तस्य स्वातन्त्र्येणैव तत्स्रष्टृत्वमिति भ्रमव्युदासाय ब्रह्मण एव चराचरस्रष्टृत्वम् 'इदꣳ सर्वमसृजत, यदिदं किं च' इत्यादिश्रुतिसिद्धं विशिष्य कीर्तितमित्यर्थः। **अज्ञातत्वेति**। अविद्याश्रयविषयस्य तद्विषयतारूपत्वेन तत एवाज्ञानत्वकथनादिति भावः। **ज्ञानपदसूचितमिति**। अपरिमितत्वस्य मुख इव ज्ञानेऽप्यन्वयादिति भावः। शास्त्रयोनित्वाधिकरणन्यायेन वेदकर्तृत्वेनैव सर्वज्ञत्वसिद्धेरितरद्व्यर्थमित्यरुचेराह— **यद्वेति**। **सर्वज्ञतेति**। नित्यमित्यस्य सर्वज्ञतादावप्यन्वयः। आत्मनः स्वरूपस्य साम्यक्सामस्त्येन बोधः स्फूर्तिः। अधिष्ठातृत्वं नियन्तृत्वम्। निरुक्तादीनीत्यादिपदेन च्छन्दोज्योतिषशिक्षाकल्पव्याकरणानि गृह्यन्ते। **ईश्वरायेति**। ऐश्वर्यमत्र सार्वज्ञ्यं विवक्षितम्; एवं च सर्वज्ञायेति तदर्थः; तथा च निघण्टुः— 'वेधास्त्रिषु स्यात्सर्वज्ञे नरि विष्णुविरिञ्चयोः' इति। व्यासस्य सर्वज्ञत्वे हेतुकथनार्थं ज्ञानशक्तीत्युत्तरार्धमित्याशयेनाह— **हरेरिति**। 'तॄ प्लवनतरणयोः' इत्यस्माद्धातोर्भावे 'ऋदोरप्' इत्यपि कृते तर इति रूपम्। ततः स्वार्थिकेऽण्प्रत्यये कृते तर एव तारः। ततः अवेत्यनेन योगे अवगतस्तारः प्राप्तिः। प्राप्तेरवमतत्वं च लीलापरिगृहीतादिव्यमङ्गलविग्रहाभिव्यक्तशरीरप्राप्तित्वात्। स यस्मिन्निति बहुव्रीहिप्रदर्शनम्। व्यधिकरणबहुव्रीहिरप्यभियुक्तसंमत एव, 'न धातुलोप आर्धधातुके' इति पाणिनिसूत्रे धातोर्लोपो यस्मिन्निति बहुव्रीह्याश्रयणात्, 'स-

च्छास्त्रजन्मा हि विवेकलाभः' इत्यादिप्रयोगाच । एतेन— भावे 'ऋदोरप्' इत्यपि कृते अवतर इति प्रसङ्गात्करणाधिकरणयोः 'अवे तॄस्त्रोर्घञ्' इत्यनेन सूत्रेण घञि कृते अवतार इति रूपम् । एवं च ज्ञानशक्तेरवतार इति षष्ठीतत्पुरुष एव । प्राप्तिर्यस्मिन्सोऽवतार इत्यवतारपदार्थप्रदर्शनमेव ग्रन्थे कृतं न तु बहुव्रीहिप्रदर्शनम्— इति परिमलोक्तं चिन्त्यम्; ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन्स तथोक्त इति कल्पतरुव्याख्यानस्यैव स्वरसतो दर्शनात्, 'अवतारान्करोत्येषा' 'कृतधरणितलापूर्वहंसावतारः' इत्यादिप्रयोगदर्शनेनावतारशब्दस्य भावेऽपि घञन्तत्वमाश्रित्य प्राप्त्यर्थकत्वस्यावश्यमभ्युपगन्तव्यत्वाच । व्यासे विष्णुशक्तिसद्भावं विष्णुपुराणवचनेन द्रढयति— **तथा चाहेति** । विष्णोर्व्यासरूपत्वं च स्वकीयाया ज्ञानशक्तेस्तत्रावतारणादिति ध्येयम् । हितमिति क्रियाविशेषणम् ॥ अत्र सूत्रे ब्रह्मविचारकर्तव्यता दृश्यते । तद्व्याख्यानार्थं प्रवृत्ते भाष्ये अध्यासाक्षेपसमाधाने टीकायां विषयप्रयोजनाक्षेपः । ततश्च कथमिदं संगच्छतामित्याशङ्क्य सूत्रसूचितयोर्विषयप्रयोजनयोरध्यासाधीनत्वादाक्षेपसमाधानाभ्यामध्याससमर्थनेन विषयप्रयोजने साधयितुमेव भाष्यं प्रवृत्तमिति कथयितुमथेत्यादिटीकेत्याह— **इह भगवतेति** । सूत्रे अथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यकथनात्साधनचतुष्टये ९
च मुमुक्षुत्वमनुप्रविष्टमिति तेन पदेन सप्रयोजनत्वं ब्रह्मजिज्ञासापदेन ब्रह्मणो जिज्ञास्यत्वकथनासंदिग्धत्वं च सूचितमित्यर्थः । 'आह कोऽयम्' इत्यादेरपि भाष्यस्याध्यासविषयत्वात्तदपि भाष्यमध्यासाक्षेपादिपरतया व्याख्यातुमथेत्यादिटीकेति भ्रमः स्यात् । न च तद्भाष्यमध्यासाक्षेपादिपरं लक्षणादिपरत्वादित्यत उक्तम्— आह कोऽयमित्यतः प्राक्तनेति । बहुग्रन्थव्यवधानादुत्तरावधिं दर्शयति— **आशयवानिति** । 'अथ यदसंदिग्धम्' इत्यथशब्दो न मङ्गलार्थः, तस्यादावेव कृतत्वात्; नानन्तर्यार्थः, अवधेरलाभात्; नापि प्रश्नार्थः, तथात्वे तदवसाने 'इति चेत्' इति भवितव्यतया इत्याशयवानिति कथनायोगादित्यत आह— **अथशब्द इति । प्रतिग्रन्थेति** । शास्त्रीयविषयप्रदर्शनपरेण मङ्गलश्लोकेनैव जगत्कारणे निर्विशेषे ब्रह्मणि भाष्यतात्पर्यस्य वर्णितत्वात्प्रतिवाक्यव्याख्यानप्रारम्भस्फुटीकरणार्थमथशब्द इत्यर्थः । एवं च टीकायामथेति नोत्तरपदैरन्वितम्, किं तु विच्छिन्नम्, योग्यतया च भाष्यविभजनं प्रारभ्यत इति तदर्थ इति ध्येयम् । ननु युष्मदस्मदित्यादिभाष्यस्य विषयप्रयोजनाक्षेपसमाधानपरतामाचक्षाणेन टीकाकृता तद्भाष्यमेवं व्याख्यातम्— शास्त्रमिदमनारम्भणीयम्, विषयप्रयोजनशून्यत्वात्; न तावद्ब्रह्म विषयः, तस्य प्रत्यगात्मतयाऽहमनुभवेनैव निश्चितत्वात्ततोऽधिकस्य वेदान्तप्रतिपाद्यस्यासिद्धेः; नाप्यनर्थनिवृत्तिः प्रयोजनम्, सत्यस्य निवृत्त्ययोगान्निवर्तकासंभवाच; न चाहंप्रत्ययस्य देहेन्द्रियादितादात्म्याध्यस्तात्मध्यासविषयकत्वात्तद्दर्शितात्मनः कर्तृभोक्तृरूपस्य नाहंप्रत्ययगम्यत्वमिति विषयसिद्धिः अनर्थहेतोरध्यासात्तत्त्वज्ञानेन तन्निवृत्तिरिति प्रयोजनसिद्धिरपीति वाच्यम्, अध्यासस्यैवासंभवात्; न हि विविक्तत्वेन भासमानयोरध्यासः संभवतीति । एवं सति तत्पुनरथेत्यादिभाष्येण पुनरुक्तमिदं भाष्यम्, अनिश्चितत्वेन विषयत्वाक्षेपपरत्वादुभयोरपि भाष्ययोरित्यत आह— **इहेति** । ननु यदसंदिग्धमित्यादिटीकया ब्रह्म न जिज्ञास्यमसंदिग्धत्वादप्रयोजनत्वाच्चेत्यनुमानं सूचितम्, तत्र व्यापकमजिज्ञास्यत्वम्, तद्विरुद्धस्य जिज्ञास्यत्वस्योपलब्धिरिति विरुद्धमापद्यत इति कथं व्यापकविरुद्धोपलब्धिरिति टीकया

सिद्धान्त्यनिष्टापादनमित्याशङ्क्य यथोक्तानुमाने हेत्वोरप्रयोजकत्वाशङ्कायां जिज्ञास्यत्वव्यापकत्वा-त्संदिग्धत्वसप्रयोजनत्वयोर्व्यापकाभावे व्याप्याभावो युक्त इति नाप्रयोजकत्वमित्येवमभिप्राया टीकेत्याह-- **जिज्ञास्यत्वेति । मुमुक्षुणेति ।** अत्र ब्रह्म न विचार्यमसंदिग्धत्वादित्येवानुमान-शरीरं यद्रूपं यं प्रत्यसंदिग्धं तत्तेन न विचार्यमिति सामान्यव्याप्तिमभिप्रेत्य प्रकृताभिप्रायेण मुमुक्षुकीर्तनम्, न तु साध्याद्यन्तर्भावेण ; मुमुक्षुणेति साध्यैकदेशनिर्देशः तदनन्तरं ब्रह्मेति पक्षनिर्देशः ततो न विचार्यमिति साध्यैकदेशान्तरनिर्देश इत्यापत्त्या ग्रन्थकृतोऽचातुर्या-पत्तेः, सामान्यव्याप्त्याश्रयणस्यावश्यिकतया तत एव यथोक्तसाध्यलाभे विशिष्य तत्कीर्तन-वैफल्याच्च । एवं च परिमले मुमुक्षुणेत्यादेः साध्याद्यनुप्रवेशमाश्रित्य विवक्षया क्लेशेन ग्रन्थव्याख्यानं चिन्त्यम्, यथाश्रुतस्यैव स्वरसत्वात् । 'बृह बृहि बृद्धौ' इति स्मरणेन बृंहतेरपि वर्धतिसमानार्थत्वात्पौनरुक्त्यमाशङ्क्य णिजर्थो विवक्षित इति परिहरति-- **देहा-**

१० **दीनामिति** । टीकोक्तं देहालम्बनत्वं देहमात्रालम्बनत्वम्, तथात्वे अहं जानामीति

११ ज्ञानाश्रयत्वप्रतीत्ययोगादित्यत आह-- **आत्मैक्येति** । ननु तदालम्बनत्वे हीत्या-दिटीकया कथं परिहारः उक्तप्रतिसंधानस्य देहतादात्म्याध्यासाविरोधित्वादित्याशङ्क्य, आत्मा देहादिभ्यो भिद्यते तेषु व्यावर्तमानेष्वप्यनुवर्तमानत्वात्, न चासिद्धिः, उक्तानुसंधाना-दिति युक्तिसहकृतेनाहंप्रत्ययेन भेदग्रहाद्राध्यास इत्यभिप्रायमाह— **देहादिति । देहैक्यं मन्वानमिति ।** 'तदेवेदं शरीरम्' इति प्रत्यभिज्ञानादिति भावः । टीकायाम्— स्वप्नान्ते । योगमहिमनिर्मितत्वेन व्याघ्रशरीरस्य कृत्रिमत्वम् । टीकायाम्-- बुद्धिमनसोरिति, अहं मनसा संदिहे बुद्ध्या निश्चिनोमि इति कर्तृकरणभावावगमादिति भावः । यथाश्रुत इति । आरोपित इति न व्याख्येयमिति भावः । टीकायाम्-- संसारश्चेति । अहंममाध्यासादिरूपः संसार आत्मयाथा-त्म्यानुभवेन तदननुभवनिवर्तनेन निवर्तनीय इत्यर्थः । स चानुभवः किमनादिरुतागन्तुकः ? नाद्य इत्याह टीकायाम्— स चेदिति । द्वितीयेऽपि किं सर्वजनीनप्रत्यगात्मविषयक एव सः उता-कर्तृभोक्तृब्रह्माभिन्नविषयक इति विकल्प्य प्रथमकल्पे अननुभवस्य निवर्तनीयस्यासिद्धिरित्याह

१२ टीकायाम्—कुतश्चेति । द्वितीयं शङ्कते—**नन्विति** । टीकायाम् अन्यथयितुम् अन्यथा कर्तुम् अकर्तृभोक्तृरूपं कर्तुमित्यर्थः । **युक्तमिति निर्देशादिति** । भाष्य इति शेषः । **पुरुषान्तर-वचन इति** । आत्ममात्रवाचकत्वेऽपि संबोध्यत्वं प्रयोगोपाधिमाश्रित्य पुरुषान्तरे प्रयोगात्तत्प्र-तिपादक इत्यर्थः । **तथा त्वंकारेति** । त्वमहमिति गौणं सामानाधिकरण्यमित्यर्थः । **दृश्यते चेति** । पटः शुक्लः इति शुक्लशब्दो गुणवाचको गुणिनि निरूढलक्षणया प्रयुक्तः, रथाङ्गशब्दस्तु चक्रवाकशब्दैकदेशचक्रशब्दपर्यायतया तद्वाच्ये चक्रवाके सांप्रतिक्या संप्रतिभवया लक्षणया प्रयुक्त इत्यर्थः । एवं गौणत्वाविशेषेऽपि निरूढसांप्रतिकत्वे युक्ते इति भेदस्फुटीकरणार्थं सांप्रतिकीं गौणीमाश्रित्य भाष्ये युष्मच्छब्दप्रयोग इति भावः । इदमस्मत्प्रत्ययगोचरयो-रिति वक्तव्य इति टीकया युष्मदस्मच्छब्दयोः पराक्त्वप्रत्यक्त्वलक्षकत्वकथनेन युष्मदस्म-त्प्रत्ययगोचरयोरिति पराक्प्रत्यक्प्रत्ययगोचरयोरित्येवं व्याख्यातम् । स्फुटसामानाधिकरण्यप्रत्य-ययोग्यपराक्विलक्षणपराक्प्रतिपत्त्यर्थं च युष्मच्छब्देन तन्निर्देशः । अत एव 'प्रत्ययो-त्तरपदयोश्च' इति सूत्रेण प्रत्यये उत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य यथाक्रमं

त्व म इत्यादेशयोर्विधानात् त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्रः इत्यादिवत् त्वन्मत्प्रत्ययगोचरयोः इति भवितव्यम्, 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषविधानादस्मच्छब्दस्यैव शेषः स्यादिति च शङ्काद्वयं निरस्तम्, अत्र युष्मदस्मच्छब्दयोर्लाक्षणिकतया सर्वनामसंज्ञावैधुर्येण यथोक्तकार्याप्रसक्तेः मुख्ययोरेव सर्वादिगणपाठितत्वेन तत्रैव तत्कार्यप्रवृत्त्यौचित्यात्। यूयं वयमिति प्रत्ययगोचरयोरिति बहुवचनान्तस्यैव प्रयोगाभ्युपगमेन 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण च 'त्वमावेकवचने' इत्यधिकारबलादेकार्थवाचिनोरेव युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशविधानान्न प्रकृते तत्प्रसक्तिरित्यप्याहुः। विषयविषयिणोरिति भाष्यव्याख्यानार्थं चित्स्वभाव इत्यादिटीका। तत्र बुद्धिरन्तःकरणम्, इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च, विषया वियदादयः शब्दादयश्च। एतेषां विषयशब्दवाच्यत्वमवयवव्युत्पत्त्या दर्शयितुमेते हीत्यादिटीका। अवबध्नन्तीति। 'षिञ् बन्धने' इति स्मरणादिति भावः। **सहानवस्थानमिति**। विरुद्धस्वभावयोरितिपदनिर्देश्यमिति भावः। दृष्टान्ते परस्परात्मत्वेनास्फुरणमसिद्धमिति शङ्कते— **नन्विति**। यस्य भेदग्रहस्तस्य तदस्तीति परिहरति— **तन्नाहेति**। वृत्तिशब्दव्याख्यानार्थं **वर्तत इति**। स्वरूपे इत्यर्थः। **अविवेकादिति**; भेदाग्रहादित्यर्थः। **तन्मात्रेति**; विरोधेन यथाभाष्यमितरेतरभावानुपपत्तिमात्रसाधने वास्तवतादात्म्याभावस्य सिद्धान्तिनाप्यङ्गीकृतत्वेन सिद्धसाधनापत्तेरित्यर्थः। **धर्मिणोरपीति**। धर्मिधर्मयोरिव धर्मिणोः संसर्गाध्यासानभ्युपगमादिति भावः। टीकायाम्— तद्धर्माणां त्विति। तथा च चिदात्मान्यस्तकर्तृत्वभोक्तृत्वाद्यनर्थनिवृत्तिरेव शास्त्रस्य प्रयोजनमिति भावः। धर्माध्यासस्यापि विवेकाग्रहपूर्वकत्वात्कथं बुद्धिपूर्वकपरिवर्तनवाचिविनिमयशब्द इत्यतो व्याचष्टे— **व्यत्यास इति**। तथा च व्यत्यासमात्रे लक्षणया प्रयुक्त इति भावः। नीरूपस्यापि गगनस्य कूपादौ प्रतिबिम्बदर्शनाद्व्यभिचार इत्यत आह— **गगनस्य त्विति**। नन्वात्मनो वस्तुतः प्रतिबिम्बासंभवेऽपि गगनस्येव प्रतिबिम्बितत्वभ्रमोऽस्तु; तावतापि तदेकलोलीभूते देहादौ धर्माध्याससंभवादित्याशङ्क्य युज्यते गगनैकलोलीभूतालोकप्रतिबिम्बे गगनप्रतिबिम्बत्वभ्रमेण गगनस्य सलिले प्रतिबिम्बितत्वभ्रमः; प्रकृते तु नात्मैकलोलीभूतं देहादौ प्रतिबिम्बयोग्यं किंचिदस्ति येन तत्प्रतिबिम्बे आत्मप्रतिबिम्बितत्वारोपेण तद्द्वारा देहादावात्मप्रतिबिम्बभ्रमः स्यादित्याह— **आत्मनस्त्विति**। पारिशेष्यमुपपादयन्नाह— **धर्माध्यासो हीति**। नन्वत इत्यादिभाष्ये इतरेतरभावानुपपत्त्या अध्यासाभावसाधनं दृश्यते तदनुपपन्नं तस्या इतरेतरभावप्रतीत्यनुपपत्तिरूपाया अध्यासाभावत्वेन साध्याविशेषादित्याशङ्क्य, अनुपपत्तिरुपपत्त्यभावः ततश्च विवेकाग्रहरूपाध्यासोपपत्त्यभावेन हेतुना अध्यासाभावः साध्यत इति न साध्याविशेष इत्याशयेनाह— **अध्यासानुपपत्तिमिति**। अथ केत्यादिग्रन्थः केषुचित्कोशेषु दृश्यते; स प्रौढिवादः, भाष्ये विषयविषयिणोरध्यासानुपपत्तेरेव दर्शनेन विषयविषयिप्रतीतेरध्यासलक्षणाभावप्रदर्शनपरत्वायोगात्, एतदुक्तं भवतीत्युत्तरटीकाविरोधाच्चेति ध्येयम्। इत्थंभावमेव दर्शयति— **चिदात्मन इति**। चिदात्मनो यदित्थं तस्य विषये आरोप इत्यर्थः। **भाष्यसूचितामिति**। इतरेतराविवेकेनेत्यंशेनेत्यर्थः। टीकायाम् अभिदधतीति शत्रन्तं बहुवचनान्तं पदम्। दर्शनादित्यस्य विशेष्यमाह— **सुन्दरीति**। **अज्ञातत्वं सूचितमिति**। ततश्च विषयत्वादिसिद्धिरिति भावः। इदमुपलक्षणम्, कथं चानुपश्य इत्यनेन विपरीतविरोधिना श्रवणादिजन्येन शुद्धात्मसाक्षात्कारेणानर्थनिवृत्तिसं-

१३ १४ १५ १६ १७

भवात्प्रयोजनमपि सूचितमिति द्रष्टव्यम्। टीकायां ज्येष्ठत्वं प्रथमप्रवृत्तत्वम्, न तूपजीव्यत्वम्। अत उपजीव्यविरोधादित्यस्य प्रथमप्रवृत्तप्रत्यक्षविरोधादित्यर्थः, अन्यथा ज्येष्ठस्यापीत्युत्तरशङ्कानुत्थितेः। पौर्वापर्यन्यायेन अनुपदमेव टीकायां प्रदर्शयिष्यमाणेनेति शेषः। ननु टीकायां प्रमितावनपेक्षत्वेऽप्युत्पत्तौ प्रत्यक्षापेक्षत्वादित्यादिशङ्का न युक्ता, आगमज्ञानस्यैव प्रत्यक्षतया आगमस्य तज्ज्ञानस्य वा तत उत्पत्त्ययोगेन तदपेक्षत्वाभावात्तज्जन्यप्रमित्युत्पत्तेस्तदपेक्षत्वेऽपि तस्य कल्पस्य पूर्वटीकयैव निरस्तत्वादित्याशङ्क्य कल्पयोर्भेदं दर्शयन्नाह-- **आगमस्येति**। अनेन स्वकार्ये प्रमितौ यत्प्रमितत्वं भ्रमत्वशङ्कानिरासो विषयपरिच्छेदकत्वं वा तन्नानपेक्षत्वादिति टीका योजिता। **आद्यद्वयं निरस्येति**। अपौरुषेयतयेत्यादिविशेषणद्वयेनेति शेषः। टीकायाम्-- तद्विरोधादिति। आगमजन्यप्रमित्यपेक्षितागमप्रत्यक्षजातीयाहमनुभवविरोधादागमेन तत्त्वज्ञानस्यानुत्पत्तिलक्षणमेवाप्रामाण्यमित्यर्थः। **आगमस्य किं प्रत्यक्षेति**। वेदान्तवाक्यजन्यस्य तत्तात्पर्यविषयतत्त्वज्ञानस्येत्यर्थः। **व्यावहारिकेति**। व्यवहारप्रयोजनकेन प्रवृत्त्यादिव्यवहारपर्यन्तं विद्यमानविषयकत्वलक्षणेन प्रामाण्येनेत्यर्थः। टीकायाम्-- अन्यधर्मा इति। ध्वनिधर्मा इत्यर्थः। न चानन्यपरमिति टीकाया अभ्यासे हि भूयस्त्वमर्थस्य भवतीत्यादिटीकया पौनरुक्त्यमाशङ्क्य प्रयोजनभेदादपौनरुक्त्यमाह-- **पूर्वमिति**। विधिवाक्यगतस्य शब्दस्य लाक्षणिकार्थासंभवेऽपि वेदान्तानां किमायातम्, तेषामविधित्वादित्यत आह-- **तत्तुल्यमिति**। तौल्ये हेतुः-- **अनवगतेति**। 'न विधौ परः शब्दार्थः' इति। नायमागमः, किं त्वनुवादस्य पुरोवादानुरोधितया लाक्षणिकत्वसंभवेऽपि विधावत्यन्तानधिगतार्थज्ञापके यथाश्रुत्यैव तदर्थः प्रतिपत्तव्य इति न्यायः, स च वेदान्तेष्वपि तुल्य इति भावः। यद्यपि 'सोमेन यजेत' इत्यादौ मत्वर्थलक्षणाभ्युपगमान्नायं नियमः समस्ति, तथापि बलवद्बाधके सत्येवान्यपरत्वं नान्यथेति भावः। किमुपजीव्यत्वं प्रत्यक्षस्य प्राबल्ये तन्त्रमुत ज्येष्ठत्वमिति विकल्प्य प्रथमं निराकृत्य द्वितीयं निराकरोतीत्याह-- **एवं तावदिति**। अनपेक्षितस्य पूर्वस्यापि बाध्यत्वे जैमिनिसूत्रसंवादमाह टीकायाम्-- तथा चेति। **ज्योतिष्टोम इति**। यज्ञशालातो हविर्धानान्निर्गच्छतामृत्विजाम् 'अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ता प्रतिहर्तारं ब्रह्मा ब्रह्माणं यजमानो यजमानं प्रशास्ता' इति श्रुतानामृत्विग्यजमानानामित्यर्थः। अपच्छिन्द्यात्, विच्छिन्नसंबन्धो भवेदित्यर्थः। **किं पूर्वमिति**। पूर्वोत्पन्ननिमित्तकं प्रायश्चित्तमित्यर्थः। नैमित्तिकस्येति। निमित्ते सति कर्तव्यमित्यवगमपूर्वकस्य पूर्वस्य प्रायश्चित्तस्येत्यर्थः। लौकप्रतिज्ञासूचितं हेतुमाह-- **इतरस्येति**। **तद्बाधकतयेति**। पूर्वोत्पन्ननिमित्तकप्रायश्चित्तकर्तव्यतावगमबाधनद्वारा तत्प्रायश्चित्तबाधकतयेत्यर्थः। पूर्वस्यैव परबाधकतयोदयः किं न स्यादित्यत आह-- **पूर्वोदयेति**। श्लोके पूर्वमिति प्रथमान्तं पदम्। पूर्वोत्पन्नज्ञानमित्यर्थः। अनन्यथोत्पादादिति। पूर्वबाधात्मताव्यतिरिक्तेन प्रकारेणोत्पादानर्हत्वादित्यर्थः। दुर्बलप्रमाणेनातिदेशेन कुशानां कथं प्रथमतः प्राप्तिरित्यत आह-- **उपकाराकाङ्क्षिण्यामिति**। विकृतिभावनया प्रथममुपकारस्यैवाकाङ्क्षितत्वेन शराणामक्लृप्तोपकारतया तत्प्रापकेण प्रत्यक्षेणापि शरशास्त्रेण न विकृतिभावनापेक्षितोपकारसमर्पणमिति दुर्बलेनाप्यतिदेशेनैव क्लृप्तोपकारकुशविषयेणोपकारमुखेन कुशाः प्रापिता इति कुशा एव

प्रथमं प्राप्ता इत्यर्थः । **निरपेक्षैरिति** । यद्यपि शरशास्त्रं चोदकापेक्षम् 'शरमयं बर्हिर्भवति' २२
इति बर्हिःकार्ये शरविधानात्, तथापि न स्वबोध्ये कुशांशे तदपेक्षेति भावः । ततश्च यथा
चरमभाव्यपच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताबुद्ध्या पूर्वापच्छेदनिमित्तकप्रायश्चित्तकर्तव्यताबुद्धे-
स्तस्मिन्प्रयोगे भ्रमत्वापादनं बाधः, तथैव वेदान्तवाक्यजन्यया चरमभाविन्यापि सच्चिदा-
नन्दब्रह्माभेदबुद्ध्या निरपेक्षया कर्तृत्वादिविशिष्टविषयिणी प्रत्यक्षबुद्धिर्बाध्यत इत्यर्थः । ननु—
निरवकाशस्य प्रत्यक्षस्य कथं बाधः? न च व्यावहारिकविषये सावकाशत्वम्, तस्यापि
कालान्तरे बाध्यत्वात्प्रातीतिकप्रामाण्यवद्व्यावहारिकप्रामाण्यस्याप्यप्रामाण्यत्वात्; न च निरव-
काशस्यापि शुक्तिरजतज्ञानवदत्यन्तबाधे को दोष इति वाच्यम्, तस्य दोषमूलकत्वेन
वैषम्यात्– इत्याशङ्क्य प्रत्यक्षस्यापि तुल्यं दोषमूलकत्वं वादिसंप्रतिपत्तेरिति दर्शयितुमपि
चेत्यादि टीकेत्याह— **एवं तावदिति** । अहमिहेत्यादिप्रतीतेर्देहप्रादेशिकत्वमेव विषय इति
वदन्प्रष्टव्यः— किं देहगतत्वेनैव प्रादेशिकत्वं विषयः, उतात्मगतत्वेन? आद्येऽपि किं शुद्धस्यैव
देहस्य धर्मः किं वा शबलस्य आहो उपचरितात्मभावस्येति विकल्प्य तत्र कल्पद्वयं निराकर्तुं
न हि तदेवमिति टीका । तत्र शुद्धदेहविषयत्वेऽहमिति सामानाधिकरण्यं न स्यादिति
प्रथमकल्पनिराकरणं सिद्धवत्कृत्य द्वितीयकल्पनिराकरणं स्फोरयति— **तव मत इति** ।
अध्यासमाक्षिपतस्तव मत इत्यर्थः । तृतीयं शङ्कते— **नन्विति** । अस्मिन्कल्पे ज्ञातृत्वं
मुख्यमुपचरितं वा, द्वयमपि निराकर्तुं गौणत्वे नेति टीका । तत्र यथोपचरिताग्निभावे
माणवके दग्धृत्वानुल्लेखस्तथैव 'जानान' इति देहे ज्ञातृत्वोल्लेखो न स्यादित्येवं प्रथमकल्पनि-
राकरणपरतया टीकां योजयति— **उपचरितेति** । द्वितीये जानान इति व्यर्थं स्यात्,
वक्त्रा स्वज्ञानाप्रकाशनादित्येवं टीकां योजयंस्तं कल्पमाशङ्क्य निराकरोति— **न चेति** । २३
इदानीमात्मगतत्वेनैव प्रादेशिकत्वं विषय इति कल्पमुत्थापयति— **अथेति** । प्रादेशिकत्वं
प्रदेशवर्तित्वम् । अग्निहोत्रशब्दस्य नैयमिकाग्निहोत्रवचनत्वमधिकरणानुक्रमेण दर्शयति—
**प्रमाणेति** । **यदग्नये चेति** । न च प्राप्ते कर्मण्यग्निप्रजापत्योरनयोरपि विधौ वाक्यभेदः
स्यादिति वाच्यम्, चशब्दनिर्दिष्टस्य समुच्चयस्यैव विधानेन तद्द्वारा देवतयोः कर्मान्वयात् ।
स्पष्टं चैतन्न्यायसुधायाम् । **प्रख्यापनादिति** । अनेन तस्य विधित्सितस्य गुणस्य प्रख्यं
प्रख्यापकमन्यच्छास्त्रं यस्मिन्नग्निहोत्रादिपदे तन्नामधेयमिति नामधेयमिति पदस्य यस्मि-
न्निति पदस्य चानुषङ्गेण सूत्रव्याख्या सूचिता । ननु पूर्वपक्षसिद्धान्तयोर्व्यधिकरणबहुव्रीहि-
रेव किमर्थमिष्यते, होत्रशब्दस्य भावे त्रन्प्रत्ययान्ततामाश्रयेण अग्नये होत्रं होम इति चतु-
र्थीसमासस्यापि संभवादित्यत आह— **न चात्रेति** । तादर्थ्यप्रकृतिविकारभावयोरभावादित्यर्थः ।
'चतुर्थी तदर्थ—' इति सूत्रे तदर्थेन प्रकृतिविकारभावे समास इष्यत इति वार्तिकेन प्रकृ-
तिविकारभावस्थल एव 'यूपाय दारु' इत्यादौ समासस्य नियमितत्वादिति भावः । **कुण्डपा-** २४
**यिनामिति** । कुण्डपायिनामयनाख्ये सत्रे 'मासमग्निहोत्रं जुहोति' इति श्रुतं यद्वाक्यं
तत्रेत्यर्थः । किं मासस्य स्वरूपेणैव विधेयत्वमुत तात्पर्यगत्या 'सायं जुहोति' इत्यादौ
सायंकालादेरिव? नाद्य इत्याह— **न तावदिति** । न द्वितीय इत्याह— **नापीति** । किं २५
स्वरूपेणैव नित्याग्निहोत्रस्य संनिधिस्थेन नाम्ना? आद्य आह— **तस्येति** । सायमादिना-

क्यस्थले तु स्वरूपेणैव सांनिध्येवैंपम्यमिति भावः। द्वितीयमाशङ्क्य निराकरोति— **न चेति।** **अन्यत्रेति।** नित्याग्निहोत्रवाक्य इत्यर्थः। ततश्च तादृशस्यैव विधानार्हत्वान्नाम्ना च तद्रूपानुपस्थितेराख्यातपरतन्त्रमेव नामेति तत्स्वारस्यात्कगतं कर्मान्तरत्वमप्रतिहतमिति भावः। **तस्मादिति।** अवच्छेदकधात्वर्थभेदादित्यर्थः। सूत्रगतप्रयोजनपदेन प्रयुज्यते विधीयत इति २६ व्युत्पत्त्या भावनोच्यत इति दर्शयति— **विधेयेति।** साध्यसादृश्यमेव दर्शयति— **सप्तमे स्थितमिति।** अग्निहोत्रशब्दो मासाग्निहोत्रे गौणो वा न वेति तदर्थसंशयं सिद्धवत्कृत्य पूर्वपक्षमाह— **तत्रेति।** उद्भिदादिवत्सामानाधिकरण्यादेव नामत्वमवगम्यत इत्यर्थः। अवयवार्थानुगमाभावान्न नामत्वमित्यनुशयेन गुणविधित्वपक्षमालम्बते पूर्वपक्षी— **अग्नीति।** न तावच्चतुर्थीतत्पुरुषः, प्रकृतिविकारभावाभावात्; नापि बहुव्रीहिः, व्यधिकरणबहुव्रीहिस्वीकारस्य प्रमाणान्तरायत्तत्वेन तत्प्रत्ययशास्त्रबलेन नित्याग्निहोत्रवाक्ये तथाभ्युपगमेऽपि प्रकृते तदभ्युपगमायोगात् एतदपेक्षया नित्यं रूढस्य गौणत्वौचित्याच्च; तदेतदाह— **न तावदिति।** सामानाधिकरण्यमात्रमकिंचित्करमनेकार्थत्वापत्तेः विनिगमकसद्भावेन नित्ये मुख्यत्वादित्याह— **तत्सिद्ध इति।** तत्तस्मात्कारणात्सिद्धे कर्मणि गुणविधानासंभवात्कर्मण एव विधेयत्वेन सिद्धे कर्मभेदे इत्यर्थः। परशब्दस्य परत्र मुख्यसादृश्यमुपादाय प्रवृत्तावपि कथं धर्मातिदेशकत्वमित्यत आह— **तच्च सादृश्यमिति।** **तत्सिद्ध्यर्थमिति।** विहितसादृश्यनिर्वाहार्थमित्यर्थः। सूत्रं व्याचष्टे— **क्रियाया इति।** विधिशब्दस्य विधीयत इति विधिरिति कर्मव्युत्पत्तिमभिप्रेत्याह— **विधेयेति।** उदाहरणान्तरस्य प्रयोजनं दर्शयन्नाह— **लोकसिद्धेति।** टीकायां सिंहादनुभवसिद्धभेदे माणवक इत्यन्वयः। न त्वहंकारस्येति टीकायामहंकारोऽहंशब्दः। **तत्त्वयेति।** निर्लुठितगर्भतयेत्यर्थः। **वादीति।** वादिनां देहतदतिरिक्तात्मादिविवादो न स्यादित्यर्थः। द्वितीयं कल्पं निराकरोतीत्याह— **एवमिति।** भेदे सिद्ध इति टीकायां सिद्धिर्निश्चयः। फलितमाह— **निरूढेऽपीति।** नार्थयोस्तादात्म्यं प्रतीयते, भेदनिश्चयादिति शेषः। अन्यथा इदमपि तैलशब्दवाच्यमित्यभिमानो न स्यादिति भावः। टीकायामभेदाध्यवसाय इत्यनन्तरं प्रकृते तु सोऽस्तीति शेषम- २७ भिप्रेत्याह— **प्रतीयते त्विति।** सिद्धं गौणत्वमित्यन्वयं व्यावर्तयति— **तत्तस्मादिति।** किमभिज्ञारूपादहंप्रत्ययादात्मनो देहादिभ्यो भेदनिश्चयः किं वा प्रत्यभिज्ञारूपादिति विकल्प्य प्रथमं न त्वहंकारस्येत्यादिना निराकृत्य मम देहो मम चक्षुरहं जानामीत्यादिप्रत्ययानां ममात्मा ममान्तःकरणमित्यादिप्रत्ययानामिव शबलिताशबलितभेदग्राहकाणां स्पष्टं भेदावभासकत्वाभावेऽपि 'योऽहं बाल्ये पितरावन्वभूवं स एवाहं स्थविरे प्रणप्तॄननुभवामि' इत्यादिप्रत्यभिज्ञानानां बालस्थविरशरीरभेदावभासकानां तदुभयानुसंधातुरेकस्यात्मनस्ताभ्यां भेदावभासकत्वादस्तु प्रत्यभिज्ञारूपादहंप्रत्ययाद्भेदनिश्चय इति द्वितीयं कल्पमाशङ्क्य निराकरोतीत्याह— **अभिज्ञारूपेति।** किमयं भेदानुभवः सर्वेषामपि अथ वा परीक्षकाणामेवेति विकल्प्य प्रथमं निराकर्तुं परीक्षकाणामित्यादिटीका; सा न युक्ता प्रत्यभिज्ञाप्रत्यक्षस्य सर्वसाधारणत्वादित्याशङ्क्य किमत्र लौकिकानां प्रत्यक्षेणैव भेदो भासते उत तत्पूर्वकेणानुमानेनेति विकल्प्य प्रथमं निराकरोति— **आत्मैक्यमिति।** योऽहं सोऽहमित्यहंपदार्थस्य तत्तेदंता-

स्पदत्वेन भानवद्बालस्थविरशरीरप्रतियोगिकभेदास्पदत्वेनानवभासनादात्मैक्यमेव प्रत्यभिज्ञाविषयो न देहाभेद इत्यर्थः । द्वितीयमनुजानाति— **भिन्नाभ्यामिति** । बालस्थविरशरीरे भिन्ने भिन्नपरिमाणत्वात् ; न चाप्रयोजकत्वम् , भिन्नयोः परिमाणयोरवयवोपचयापचयाधीनत्वेन तदुपचये पूर्वावयविनोऽवान्तरकार्यरूपतया तत्सहितानामागन्तुकावयवानामवयव्यन्तरारम्भकत्वावश्यंभावात् तदपचये च कतिपयावयवनाशेऽवयविनाशावश्यंभावेन शिष्टानामवयवानामवयव्यन्तरारम्भकत्वस्यावश्यिकत्वादित्यनुमानेनैव शरीरयोः परस्परभेदो विनिश्चेतव्यः, न तु प्रत्यक्षेण, तयोर्भिन्नकालतया तद्भेदस्य प्रत्यक्षायोगात् , योऽयं मदीयो देहः पूर्वं पुष्ट आसीत्स एवेदानीं कृश इत्यभेदप्रत्यभिज्ञाया अपि दर्शनेन यथोक्तानुमानोपोद्बलनमन्तरा प्रत्यक्षेण तन्निश्चयायोगाच्च ; ततश्च शरीरयोरेवं भेदं प्रसाध्य तदनन्तरं शरीरात्मानौ भिन्नौ एकत्वनानात्वविरुद्धधर्माश्रयत्वादित्यनुमानान्तरादात्मनि शरीरभेदः साधनीय इत्यर्थः । निराकरोति— **तच्चेति** । तच्चथोक्तमनुमानं व्याप्त्यादिप्रतिसंधानसापेक्षतया व्याप्त्यादिनिश्चायकशास्त्रपरिचयमन्तरा न लौकिकैर्ज्ञातुं शक्यमित्यर्थः । लोकप्रसिद्धकार्यकारणभावधूमवह्न्यादिव्याप्तेः शास्त्रेण विना ग्रहीतुं शक्यत्वेऽपि परिमाणभेदाधीनद्रव्यभेदादिस्थलीयव्याप्त्यादिस्वरूपं न शास्त्रेण विना सुग्रहमिति भावः । द्वितीयमाशङ्कते— **तर्हीति । गौण इति** । ततश्च न सर्वसाधारण्येन विपर्यासिद्धिरिति भावः । २८

परीक्षकाणामपि किं सर्वदा भेदग्रहस्स्यादभ्यासायोग उत विचारसमये ? आद्यं टीकया निराकरोति— **नेत्याहेति** । टीकायां लोकसामान्यं लोकसाम्यम् । प्रवृत्त्यादिलक्षणव्यवहारसमये विदुषामपि पश्वादिभिरविशेषादिति टीकोदाहृतभाष्यफक्किकार्थः । टीकायाम्— **शास्त्रचिन्तका इति** । शास्त्रचिन्तकाः सन्तः खल्वेवं विवेनयन्ति न प्रतिपत्तारः सन्त इत्यर्थः । ततश्च शास्त्रचिन्तनदशायामेव विवेकग्रहो न प्रतिपत्तिदशायामिति भावः । द्वितीयं निराकरोति— **अपरोक्षेति** । दिङ्मोहादौ तथा दर्शनादिति भावः । टीकायां घटशब्देन सेचनघट उच्यते, मणिकादिशब्दैस्तदधिकपरिमाणा विस्तीर्णमुखा मार्त्तिका उच्यन्ते । तथा चापस्तम्बगृह्यम्--'मणिकं प्रतिष्ठाप्य तस्मिंश्चतुर उदकुम्भानानयति' इति । **आत्मावयवानामिति**, आत्मशब्दवाच्यानामवयवानामित्यर्थः । **काकतालीया चेति** । आगच्छतः काकस्य पततस्तालफलस्य च यथा यादृच्छिकः समागमस्तथा समुदायापत्तिरपि यादृच्छिकी चेत्यर्थः । **आद्यं निरस्येति** । किं शरीरावयवैः पृथक्त्वं सति आत्मावयवोऽपि पृथक् उत न ? नान्त्यः, तस्य शरीरव्यतिरिक्तप्रदेशे वर्तमानस्य शरीरोपाधिकसमुदायभावापत्त्ययोगेन व्यर्थत्वात् अवयवान्तरेषु निविष्टेषु प्रवेशायोगाच्च । नाद्यः, व्यासक्तस्य चैतन्यस्य कतिपयसमुदायिनाशेऽयोगादित्येवं समुदायस्य स्थिर्यादिदोषतया निरस्येत्यर्थः । गौणत्वे हेतुमाह— **यादृच्छिकेति** । मूर्च्छादिदशायामचैतन्याभ्युपगमादित्यर्थान्त वारयति— **स्वस्थानामिति । विवेकासिद्धाविति** । 'माणवको न सिंहः' इतिवत् 'नाहं कृशो नाहमन्धो नाहं गच्छामि' इति निर्विवादकस्य भेदप्रत्यक्षादर्शनादिति भावः । **विषयसिद्धिमिति** । अहंप्रत्ययाविषयीभूतात्कर्तृभोक्तृस्वरूपस्यैव विषयत्वलाभादिति भावः । **प्रयोजनसिद्धिमिति** । [illegible]
वर्णयितव्यत्वेनो[illegible] प्रयोजनत्वं-

३१ भवादित्यर्थः । टीकायाम्— उपव्याख्यानमिति । तथापीति भाष्ये संग्रहेण व्याख्यातस्याहंप्रत्ययस्य स्वरूपादिभिः प्रपञ्चनम् । तथा च 'तस्योपव्याख्यानम्' इति च्छान्दोग्यवाक्यव्याख्यानभाष्यम्— एवमुपासनमेवं विभूतिरेवं च फलमित्यादिकथनमुपव्याख्यानमिति । स्वरूपशब्देन धर्म्यध्यासस्वरूपं धर्माध्यासस्वरूपं च गृह्यत इत्याह— स्वरूपमिति । व्यवहारे इदमभिलापो वार्यते इदंविषयकत्वं वा, आद्यं न प्रतीतित इति टीकांशेन परिहरति —आशङ्क्याहेति । द्वितीयं वस्तुत इति टीकाभिप्रायकथनेन परिहरति— अहमिति प्रतीतेऽपीति । ततश्च तद्वतेदमंशद्योतनाय भाष्ये इदंशब्दप्रयोग इति भावः । एकस्येति । अध्यासे देवदत्तादेः कर्तृत्वाद्व्यवहार इत्यत्र गम्यमानास्तिधातुनिर्दिष्टभवनक्रियायां च व्यवहारस्यैव कर्तृत्वादित्यर्थः । क्तेरिव धात्वर्थस्यापि कर्त्राक्षेपकत्वाद्भुक्त्वा गमनमित्यादिवदविरोध इत्याह— व्यवहारेति । उपसंहारभाष्ये एवमयमनादिरनन्त इत्यादि भाष्ये । अध्यास एवेति । उपक्रमस्थस्यापि व्यवहारशब्दस्याभिज्ञाभिलपनसाधारणस्योपसंहारस्थेन विशेषवाचकेनाध्यासपदेनार्थनिर्णयो युक्त इति भावः । अध्यस्य व्यवहार इति स्ववाक्यगतोपपदादेव निर्णयसिद्धेरार्थिकार्थस्य पश्चादुपसंहारसंभवाच्च न दोष इति परिहरति— उच्यत इति । पौर्वापर्यायोगे हेतुमाह— चित इति । अध्यासाधीनतादात्म्याभावे शुद्धायाश्चित आश्रयत्वानर्हतया निराश्रयक्रियाया एवासंभवे कुतः पौर्वापर्यमित्यर्थः । आद्यं दोषं स्वयं परिहरति— तत्रेति । पौर्वापर्यमात्रेऽपि क्त्वाप्रत्ययदर्शनादस्पष्टत्वप्रसक्तिरित्याह— सुप्त्वेति । टीकायम्— अथाविवेक एवेति । जातिव्यक्त्योरिव वस्तुसत्तादात्म्यमेवेत्यर्थः । धर्मधर्म्यध्यासयोरेव द्विविधव्यवहारहेतुत्वं युक्तम्, न तु मिथुनीकरणमात्रस्य; ततश्च योग्य-

३३ ताविरहादानन्तर्यमात्रमकिंचित्करमित्याशयेनाह— मिथुनीकरणादिति । युगलीकरणं न तादात्म्यम्, किं तु साहित्यमेकबुद्धिविषयत्वलक्षणम्, तावतापि भेदाग्रहसिद्धेरित्याशयेनाह— युगलीकरणं नामेति । किमिति नोक्तमिति । मुग्धत्वादिति भावः । टीकायां

३४ संवृतिशब्देन प्रतीतिमात्रसिद्धमुच्यते । च्विप्रत्ययो भवतीति । कृभ्वस्तियोगे सति संपत्तिकर्तरि च्विप्रत्ययोऽभवनीत्यर्थः । सत्यानृतयोर्मिथुनभावमप्राप्तयोरेव मिथुनभावस्य विवक्षितत्वादिति भावः । 'अस्य च्वौ' इति च्वेर्लुप्तत्वेऽपि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति शास्त्रादकारस्य च्वौ परत ईकार इत्यर्थः । नैसर्गिक इति भाष्यस्य तात्पर्यवर्णने बीजमाह— समारोपेति । पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्येति टीकायां मिथ्याज्ञानशब्देन तत्संस्कारो विवक्षितः, उत्तरोत्तराध्यासहेतुधर्मिज्ञानादिकाले पूर्वपूर्वमिथ्याज्ञानस्य नष्टत्वेन तस्य बुद्धीन्द्रियादिविषयोपदर्शनद्वारा उत्तरोत्तराध्यासहेतुत्वायोगात्; तनश्च अनादित्वादिति टीकायामनादित्वमपि पूर्वपूर्वमिथ्याज्ञानसंस्काराणामुत्तरोत्तरमिथ्याज्ञानानां चोक्तम् । एवं च तदनादित्वं किं व्यक्त्योर्जात्योः समुदाययोर्वेति विकल्प्य कैश्चिद्दूषितमित्याह — अत्रैक इति । बीजत्वाङ्कुरत्वजात्यवच्छिन्नयोरिव भ्रमत्वतत्संस्कारत्वजात्यवच्छिन्नयोरपि निमित्तनैमित्तिकभावो युज्यत एवेति परिहरति— तत्र ब्रूम इति । ननु टीकाकृता किमित्यध्यासव्यवहारयोरेवानादित्वमुक्तम्, भ्रमोपादानस्य मूलाज्ञानस्यापि वक्तव्यत्वात्; अत एव मिथ्याज्ञाननिमित्त इति भाष्येण मिथ्याभूतमज्ञानं निमित्तमुपादानं यस्येति तदुपादानमुक्तमिति केचिद्व्याचक्षत इत्याशङ्क्य शङ्काभाष्ये विवे-

काग्रहविरहेणैवाध्यासाक्षेपात्तत्सद्भाव एवाध्यासोपयोगितया समर्थनीयः। अध्यासस्य दुरपह्नवत्वाय तत्फलकीर्तनं विवेकाग्रहोपयोगितया च मिथुनीकरणमुक्तम्। तत्र च परस्पराश्रयपरिहाराय निमित्तनैमित्तिकयोरध्यासव्यवहारयोरेवानादित्वमुक्तम्, न तु भ्रमोपादानस्यापि, अनुपयोगात्। अत एव न भाष्यस्य मूलाज्ञानपरत्वम्, निमित्तशब्दविरोधाच्च; तदनादित्वं तु देवताधिकरण एव संगतमिति तत्रैव वक्ष्यत इत्याशयेन परिहरति— अत्र चेति। ननु प्रकाशमानतैव सत्तेत्युत्तरग्रन्थपर्यालोचनया शङ्कावादिना प्रतीयमानस्यापारमार्थिकत्वं नेष्यते, ततश्च न तु प्रतीयमानस्येति टीकानुपपत्तिरित्याशङ्क्य प्रतीतिमात्रमपि तन्त्रं न तु प्रतीयमानस्य परमार्थसत्तापीति त्वयोक्तं सत्यमिति सिद्धान्त्युक्तानुवादेन तन्निराकरणपरतया टीकायोजनामभिप्रेत्य व्याचष्टे— सत्यानृते इति। अनेन परमार्थसत्त्वेत्यनन्तरमितिशब्दाध्याहारेण इति यत्त्वयोक्तं तदद्धा सत्यमित्येवं टीका व्याख्याता। नन्वनृतस्य प्रतीत्यसंभवे विवेकग्रहस्य दूरापास्तत्वात्कथं युष्मदस्मदित्यादिना विवेकाग्रहादध्यासाक्षेप इत्याशङ्क्य प्रतीत्यभ्युपगमेन स ग्रन्थः प्रवृत्त इत्याशयेनाह-- युष्मदस्मदिति। देहादि किमत्यन्तमसत् उतानिर्वचनीयमिति विकल्प्य प्रथमं निरस्तं प्रतीतिरेव स्यादिति टीकया। तत्र प्रतीतिं व्याचष्टे— अपरोक्षेति। अनुवादायोगः स्यादिति। अत्यन्तासत इति पदेन प्रतीतिनिषेधार्थमनुवादायोगः स्यादित्यर्थः। द्वितीयं शङ्कते— नन्विति। प्रकाशमानत्वस्यैव परमार्थसत्तारूपत्वान्नानिर्वचनीयतेति परिहरति— अत आहेति। टीकायां नासन्त इत्यसत्त्वानिर्वाच्यत्वयोरुभयोरपि निषेधः लक्षणवाक्ये यथोक्तशङ्कापरिहारादर्शनादाचक्षाण एव परिहरतीत्ययुक्तमित्यत आह— दृष्टग्रहणेनेति। एतच्च तस्य च दृष्टत्वमात्रमुपयुज्यत इति टीकायां स्पष्टमिति भावः। ३५

संक्षिप्तमिति। एकपदनिर्दिष्टत्वादिति भावः। उच्छेदो बाधकप्रत्ययानन्तरमननुवृत्तिः, ३६ तिरस्कारः प्रवृत्त्यादिकार्याक्षमत्वम्, अनयोः प्रत्ययान्तरेण विषयापहारलक्षणे बाधे सत्येव संभवात्; स एव टीकायामवसादादित्वेनोक्तः। नन्ववभासपदस्य विस्तृतलक्षणान्तर्भावे शेषवैयर्थ्यम्, अनन्तर्भावे लक्षणासंभव इत्यत आह— अवभासपदस्येति। भाष्यवाक्यार्थत्वेनेति। ततश्च लक्षणवाक्यगतावभासपदसूचितं संक्षिप्तं लक्षणं टीकाकारेण कल्पितमिति भावः। लक्षणप्रयोजनयोर्व्यावृत्तिव्यवहारयोः संग्रहलक्षणेनैव सिद्धेर्विस्तृतं व्यर्थमित्याशङ्क्य मतान्तरनिरासस्तस्य फलमित्याह— परत्रेत्यादीति। स्वरूपेण सदर्पत्यनेनारोपणीयस्य देशान्तरसत्त्वाभ्युपगमेऽन्यथाख्यात्यापत्तिरित्यत आह— अपिशब्देनेति। पूर्वदृष्टपदस्य स्मृतिरूपपदसमभिव्याहारलब्धमनृतार्थकत्वं नान्यथा; ततश्च युक्ता शङ्केति गूढाभिसंधिराह-- स्मृतिरूपविशेषणेति। उदाहरणद्वयप्रदर्शनस्य ३७ फलमाह-- पूर्वदृष्टस्येत्यादिना। लक्षणवाक्यार्थे पूर्वदृष्टस्य परत्र तादात्म्यावभास इति यो धर्म्यध्यासांशस्तमभिप्रेत्येति योजना। एवमुत्तरत्रापि। टीकायाम्— स्वस्तिमत्यां स्वस्तिकांचिकवत्याम्। ननु गौत्वप्रत्यभिज्ञायां नातिव्याप्तिः, अवभासपदेनैव तद्वारणात्, तस्य मिथ्याज्ञानार्थकत्वात्, अन्यथा नानार्थत्वापत्तेरित्याशङ्क्य न तावदवयवार्थस्वीकारप्रयुक्तो दोष इत्याह— अवभासपदस्येति। अलंकारकत्वादेव नानार्थत्वं न दोषायेत्याह— सकृच्छ्रुतेति। अन्यथा श्लेषादिवैफल्यापत्तेरिति भावः। गूढमभिसंधिं शङ्का-

पूर्वकं प्रकटयति— **नन्वित्यादिना**। स्मृतिसादृश्यं संस्कारजन्यत्वरूपमेव किमिति न स्वा-
३८ कृतमित्यत आह— **प्रत्यभिज्ञाया अपीति**। परत्रेति विशेषणव्यावर्त्यमाह— **स्मृतिरूपेति**। ननु न स्मृतावतिव्याप्तिः, स्मृतिरूपपदेनैव तद्वारणात्; असंनिहितविषयत्वं हि स्मृतिरूपत्वमुक्तम्, तच्चाधिष्ठाने आरोप्यस्य परमार्थतोऽसत्त्वमिति वक्ष्यते; स्मृतिविषयश्च परमार्थसन्निति कथं तत्रातिव्याप्तिरित्याशङ्क्य यथाश्रुताभिप्रायेण तत्कथनमित्याह— **असंनिहितविषयत्वे विवक्षित इति**। **तन्निवृत्त्यर्थ इति**। स्मृतिविषयस्य स्वदेशान्यदेशेऽनवभासनात् परत्रेति विशेषणेन स्मृतिव्यावृत्तिरिति भावः। नन्वनेन भाष्येण कीदृशमध्यासलक्षणमुक्तम्? न तावद्यथाश्रुतम्, प्रत्यभिज्ञायामतिव्याप्तेः अनिर्वचनीयरजतस्य विलक्षणस्यैव शुक्त्यादावुत्पत्त्यभ्युपगमेन तस्य पूर्वदृष्टत्वाभावाच्च; न चारोप्यतावच्छेदकधर्मेण पूर्वदृष्टसजातीयत्वं विवक्षितमिति वाच्यम्, अपूर्वव्यक्तिविशेषाध्यासस्थले तस्य पूर्वदृष्टसजातीयत्वे मानाभावात् अनुभूयमानारोपाव्याप्तेश्च; नापि परत्र सत्ये पूर्वदृष्टस्यानृतस्य स्मृतिरूपः स्मर्यमाणसदृशोऽसंनिहितविषयोऽवभासोऽध्यासः, आरोप्यरजतादेरसंनिहितत्वासिद्धेः आत्माध्यासाधिष्ठानस्य देहादेः सत्यत्वाभावात् वंशोरगादौ करालत्वाद्यध्यासाव्याप्तेश्च। परिमले तु— अधिष्ठानासमानसत्ताकस्यावभासोऽध्यास इति लक्षणमभिमतम्; यद्गतमवभास्यं तदधिष्ठानम्। तथा च न गोत्वप्रत्यभिज्ञायामतिव्याप्तिः, गोत्वादेर्गोव्यक्त्यादिरूपाधिष्ठानसमसत्ताकत्वात्, ब्रह्मणि तु वियदादीनामध्यस्तत्वसंभवात् सर्वाध्यासानुगतं लक्षणमित्युक्तम्; तच्चिन्त्यम्, प्रत्यभिज्ञायामतिव्याप्तेः, गोव्यक्तेश्चिरप्रध्वंसित्वेन सादित्वेन च गोत्वस्य तद्विलक्षणत्वेन तत्सत्तयोरपि चिराचिरकालभावित्वेन साधनादित्वेन च भेदावश्यंभावात्, प्रातीतिकव्यावहारिकपारमार्थिकरूपेण सत्तात्रैविध्यनियमस्य स्वपरिभाषामात्रत्वेन परं प्रत्युपन्यासानर्हत्वात्; किं च स्वाप्निके गजे गजत्वप्रत्यभिज्ञायामतिव्याप्तिः अधिष्ठानस्य प्रातीतिकत्वात्तस्मिन्गजे गजत्वस्य बाधाभावेन तस्य व्यावहारिकत्वात् प्रातीतिके प्रातीतिकाध्यासाव्याप्तेश्च; तस्मादसंगतं लक्षणमित्याशङ्क्य निष्कृष्टं लक्षणमाह— **अन्येनेति**। असंनिधानस्य देशान्तरावस्थानरूपत्वेऽन्यथाख्यात्यापत्तिरित्यत आह— **असंनिधानं चेति**। अयमाशयः— सत्येऽनृतावभास इत्येव लक्षणम्। अधिष्ठानस्य सत्यत्वं च बाधाधिष्ठानत्वम्। यस्मिन्बाध्यमानेऽपि यत्तिष्ठति तस्य तदपेक्षया सत्यत्वात्। स्वरूपेण सतोऽप्यारोप्यस्य समारोपणीयत्वेनानृतत्वं स्पष्टमेव टीकायामुक्तम् ततश्च नात्माध्यासाव्याप्तिः देहादावात्मतादात्म्ये बाध्यमानेऽपि तदानीं देहादेरबाध्यमानत्वात्। एवं करालत्वादिबाधाधिष्ठानत्वेन वंशोरगादेः सत्यत्वावश्यंभावान्न तत्राप्यव्याप्तिः, स्वाप्निकगजादौ च गजत्वादेर्बाधाभावान्नातिव्याप्तिरपीति सर्वमनवद्यम्॥

नन्वेवमप्यारोप्यानृतत्वफलकं स्मृतिरूपत्वविशेषणं व्यर्थम्, पूर्वदृष्टपदेनैव तत्सिद्धेरित्याशङ्क्य मतान्तरनिरासद्वारा तदर्थस्फोरणाय तदुपादानम्, पूर्वदृष्टत्वमात्रेण तदनिरासादित्याशयेनाह—
३९ **अथ चेति**। नापसिद्धान्तपरिहाराय तदुपादानम्, किं तु सत्ख्यातिनिरासायेत्यथवाशब्दार्थः। श्लोके असंनिधानेनेति च्छेदः। **सत्ख्यातिरिति**। अधिष्ठाने परमार्थतो विद्यमानार्थविषयिणी ख्यातिरित्यर्थः। **असत्ख्यातिरिति**। पुरोवर्तिन्यविद्यमानार्थविषयिणी ख्यातिरित्यर्थः। अनेनान्यथाख्यात्यात्मख्यात्यसत्ख्यातयश्चत्वारोऽपि निर्दिष्टाः। ता अवभासपदेन

वारिताः, असदादेः स्पष्टं पुरोवस्थितत्वेनावभासायोगादित्यर्थः । नन्वेवं पूर्वदृष्टपदं व्यर्थमित्यत आह— **असंनिहितस्येति** । **उक्तमेवेति** । टीकायामिति शेषः । सत्याधिष्ठानाभावेन स्व- ४० प्नभ्रमेऽव्याप्तिं प्रसञ्जयति— **स्वप्नज्ञान इति** । किमियमव्याप्तिः सिद्धान्तरीत्या उत लोकरीत्या ? नाद्यः, अन्तःकरणतद्धर्माणामिव स्वप्नप्रपञ्चस्यापि साक्ष्यधिष्ठानकत्वादित्यभिप्रायेण नाव्याप्तिरित्यनेन निराकृत्य द्वितीयं स्वप्नज्ञानस्यापीत्यनेन निराकृतम् । तत्र स्मृतिविभ्रमस्येति न कर्मधारयः, सिद्धान्ते स्वप्नभ्रमस्यान्तरप्रत्यक्षरूपतया स्मृतिरूपत्वाभावादित्यत आह— **स्मृताविति** । स्मृतिशब्दं कर्मव्युत्पन्नमाश्रित्याह— **स्मर्यमाण इति** । पूर्वदृष्टत्वमुपपादयति— **अनुभूयमान इति** । पूर्वमिति शेषः । एतच्च प्रौढ्योक्तम्, आरोप्यस्य तदधिष्ठाने पूर्वदृष्टत्वोपपादनवैफल्यात् तन्निष्ठस्य संनिहितदेशकालत्वस्यारोपणीयतयाप्यनुक्तत्वाभावेन तदध्यासे लक्षणाव्याप्तेश्च अत एव टीकाग्रन्थेषु तत्र तत्र पूर्वदृष्टस्येत्यपि क्वचित्पाठो दृश्यत इति ध्येयम् । एवं 'पीतः शङ्खः' इत्याद्यतिदेशोऽपि लोकरीतिमनुसृत्यैव, सिद्धान्ते पूर्वदृष्टत्वानपेक्षणात् पीततादेः स्वरूपेणाप्यारोप्यतया सामानाधिकरण्यपर्यन्तधावनायोगादित्याशयेनाह— **अन्यार्थमिति** । ४१ पूर्वप्रमितत्वव्यावर्तनार्थमित्यर्थः । टीकायां पित्तदूषितस्य वेगेन निर्गच्छदत्यच्छनयनरश्मिकलोलीभावोक्तिस्तस्य परकीयचक्षुरयोग्यत्वप्रदर्शनाय । ननु पीतिमतपनीययोः कथमसंसर्गाग्रहणं तयोरसंसर्गस्यैवाभावात्, प्रत्युत संसर्गसत्त्वेन तस्यैव ग्रहणादित्याशङ्क्य दृष्टान्तदार्ष्टान्तिकयोरसंसर्गस्य विद्यमानाविद्यमानत्वेन भेदेऽपि तदग्रहणमविशिष्टमिति साम्यमुपपादयति— **पीतिमतपनीययोरिति** । टीकायां सामानाधिकरण्यं तादात्म्यम्; तच्च पीतिमतपनीययोः प्रसिद्धमनुभूयमानयोः पीतिमशङ्खयोरारोप्यत इत्यर्थः । एतच्च तादात्म्यस्यारोप्यत्वमभ्युपेत्योक्तं शङ्खे पीतिम्न एवारोपसंभवादिति ध्येयम् । प्रतिबिम्बविभ्रमस्थले पूर्ववैधर्म्येण शङ्कां दर्शयति— **आदर्शादिष्विति** । आदर्शे मुखं नारोप्यते, किं तु मुख एव दर्पणाभिमुख्ययो- ४२ रारोप इति परिहरति— **आशङ्क्याहेति** । टीकायां शरीरेण तेजसा प्रातिलोम्येन प्रवर्तितं मुखसंपृक्तं चाक्षुषं तेजो मुखं ग्राहयदित्यन्वयः । मुखे अधिकरणत्वेन दर्पणस्थत्वारोपात् पूर्वदृष्टत्वं न देशताविशेषणमित्याशयेन व्याचष्टे— **पूर्वदृष्टयोरिति** । **तयोरेवेति** । आदर्शाद- ४३ क्योरेव विद्यमानमाभिमुख्यं चेत्यर्थः । उल्मुकज्वालासु शकटाक्षादिषु पूर्वदृष्टचक्राकारतया आरोपे शीघ्रभ्रमणं दोष इति दर्शयितुं शीघ्रभ्रमितेत्युक्तम् । गन्धर्वनगरभ्रमं व्याचष्टे— **अभ्रेष्विति** । **वसावर्णेषु चेति** । नायनरश्मिसहनिर्गतवसावयवगतेषु चक्षुषा गृह्यमाणेष्वित्यर्थः । अत्रापि सामानाधिकरण्यं तादात्म्यम् । अङ्गशब्दस्यापि तरङ्गवाचित्वे पौनरुक्त्यमित्यत आह— **तरङ्गविच्छेदानामिति** । टीकायामसतः प्रकाशनं न संभवतीति ४४ वदन्प्रष्टव्यः किं सत एव भानमुत रूपान्तरेण सतोऽसतो रूपान्तरेण भानमिति विकल्प्य प्रथमं मरीचितोयस्यापि प्रकाशमानस्य परमार्थसत्त्वे तत्कार्यं पिपासोपशमनादिकं स्यादिति तथा सतीत्यादिना निराकृत्य द्वितीयं निराकरोति— न चेति । किं मरीचीनां तोयस्य स्वरूपेणैव भानमुत तादात्म्येन ? नाद्यः, मरीचयस्तोयमिति च प्रतीत्यापत्तौ मरीचिषु तोयार्थिप्रवृत्त्यनापत्तेः, द्वितीये किं मरीचीनां तोयात्मत्वमसत् उत सत् ? नाद्यः, असतो भानानभ्युपगमादित्याह— सत इति । तोयाद्यात्मना असतामित्यन्वयः । द्वितीयं निरा-

करोति— न चेति । तथात्वे तोयकार्यापत्तेरिति टीकार्थः । मरीचीनां तोयात्मत्वमसदेव; न चासतो भानायोगः, अत्यन्तासत्त्वं हि भानविरोधि तोयतादात्म्यासत्त्वं तु मरीचीनां स्वरूपमेव असत्त्वस्य सत्त्वाभावतया सत्त्वस्य च धर्म्यभेदेन तोयात्मना असत्त्वस्य तोयतादात्म्याभावरूपतया तस्य मरीचिरूपत्वादिति प्रथमकल्पाभ्युपगमेन यद्युच्येतेत्यादिशङ्का;

४५ अतो न तट्टीकासांगत्यमित्यवतारयति—**मरीचीनामिति** । टीकायाम्–ततश्च भावात्मनेति । असतोऽपि तोयात्मत्वस्य मरीचिरूपभावान्तरात्मनोपाख्येयतया व्यवहारयोग्यतयेत्यर्थः । स्वस्य प्रत्ययश्च इति षष्ठीतत्पुरुषे स्वानन्तरभाविप्रत्ययसामर्थ्यादसत्प्रकाशनसामर्थ्यं स्वस्येति स्यात् अतो व्याचष्टे— **स्वसमानेति** । शून्यवादिमते ज्ञानस्याप्यसत्त्वात्पूर्वज्ञानाधीनत्वमुत्तरज्ञानस्य सत्त्वं नाधिकमिति दर्शयितुं स्वप्रत्ययेति विशेषणमिति भावः । शङ्करपि विज्ञानरूपत्वाच्च दोष इति परिहरति— **अत आहेति** । अनवस्थापाताच्चेति हेतुः । पक्षान्तर इति व्याचष्टे- **उपलब्धौ चेति** । असतः प्रत्ययजन्योपकाराधारत्ववत्प्रत्ययोपकारकत्वाधार-

४६ त्वस्याप्ययोगात् कथं तदभ्युपगम इत्यत आह– **इत्युपहास इति** । असत्यपीत्यनेन तदप्युद्घाटितमिति भावः । कः पुनरेष सदसतोः संबन्ध इति संबन्धस्य पृष्टत्वात्स्वभावकथनमयुक्तमित्याशङ्क्य असता साकं प्रत्ययस्य स्वभावः स्वाभाविकसंबन्ध इति टीकार्थ इत्याशयेनाह— **असत इति । स्वभावश्चेति** । तादात्म्यमित्यर्थः । अत्र टीकायां निस्तत्त्वस्यानुभवगोचरत्वाभावे मरीचितोयप्रत्ययस्य किं मरीचीनां तोयात्मना सत्त्वं विषयः उत तदात्मना असत्त्वम्? आद्ये प्रवृत्तिसंवादापत्तिरिति दूषितम्, तत्किमिदानीमिति द्वितीयमाशङ्कत इत्याशयेनाह— **पूर्वपक्ष्याहेति** । तोयात्मना असत्त्वस्यैव साध्यत्वेन तदात्मनेति हेतोः साध्याविशेषमाशङ्क्याह— **तदात्मनेति** । तदात्मना असत्त्वस्य सर्वसंप्रतिपन्नत्वं हेतुरिति भावः । असत्त्वमतिरिक्तमिति मन्वानः शङ्कते— **तर्हीति** । यत्प्रतियोगिनिरूपणाधीननिरूपणकं यत्स्वरूपं तदेव तदसत्त्वमिति न दोष इत्याह— **तोयमपेक्ष्येति** । यदिदं मरीचीनां तोयरूपेणासत्त्वं स्वरूपं तत्किं तेनैव रूपेण भ्रमो विषयीकरोति, उत रूपान्तरेण तोयात्मना? नाद्यः, भ्रमत्वव्याघातादिति तत्किमित्यादिटीकाभिप्रायकथनेन निराकुर्वन्द्वितीयमाशङ्कत इत्याह— **तोयरूपेणेत्यादिना** । वस्त्वन्तरमपि किं मरीचितोयोभयभिन्नम् एतदन्यतररूपं वेति विकल्प्य प्रथमं निराकर्तुं न चारोपितमिति टीका, तदभिप्रायं

४७ दर्शयन्नेवोत्तरटीकाभिप्रायमाह— **अस्मिन्विभ्रम इत्यादिना । एवं मरीचितोयतादात्म्यमनिर्वाच्यं प्रसाध्येति** । अनेन मरीचिषु तोयमारोपणीयं सदनिर्वाच्यमास्थेयमिति

४८ वर्णितः । **तथेति** । स्वरूपेणापीत्यन्वयः । मरीचितोयमनिर्वाच्यं बाध्यत्वे सति पुरोवस्थितत्वेन टीकार्थो भासमानत्वात् तत्तादात्म्यवदिति भावः । **मुधा अमुष्येति** । स्पष्टम् । पुरोवस्थितत्वे नावभासमानत्वान्नेदं रजतमिति इदम्येव रजतबाधदर्शनात्पूर्वानुभूतविलक्षणस्यैव रजतस्यानुभूयमानत्वात्स्वाप्निकगजादाविव विलक्षणरजताद्युत्पत्तिसामग्र्या अपि कल्पनीयत्वात् । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते' इति प्रातीतिकसृष्टेरपि श्रुतिसिद्धत्वाच्चात्मनि देशान्तरे वा सत्त्वकल्पना युक्तेत्यर्थः । पूर्वदृष्टमिवेत्यनेन कथं परिहार इत्याशङ्क्य पूर्वदृष्टसाजात्यप्रतिपादनद्वारा पूर्वप्रमितत्वव्यावर्तनफलं पूर्वदृष्टग्रहणमित्याशयमाह—

**अभिनवत्वेऽपीति** । **रूपेति** । मतमितीतिशब्दाध्याहारेण श्लोकार्थो योज्यः । देहादि ४९ सदिति । नासन्त इति पूर्वपक्षयुक्तसाध्यस्य पर्यवसितमेतत् साध्यम् । तच्च प्रमितिविषयत्वं न त्वबाध्यत्वम्, तस्यैवोपाधित्वात् । उपाधिः प्रयोजकः । एतावत्सिद्धवत्कृत्य साधनव्यापकत्वशङ्कानिरासाय टीकेत्याह— **न चेति** । नन्वबाध्यत्वं बाध्यभिन्नत्वम्; ततश्च प्रपञ्चमात्रस्य ५० बाध्यतया पक्षमात्रव्यावर्तकं बाध्यत्वविशेषणमित्यबाध्यत्वोपाधेः पक्षेतरता स्यादित्याशङ्क्य व्यावहारिकस्यैव विवादास्पदस्य पक्षतया बाध्यत्वविशेषणस्य विपक्षमरीचितोयादिव्यावर्तकत्वान्न दोष इत्याह— **विपक्षस्येति** । ननु देहादि न बाध्यं प्रमाणप्रमितत्वादात्मवत्, ततश्च न मिथ्यात्वम् अन्यथा आत्मनोऽपि मिथ्यात्वापत्तेरिति शङ्कते— **नन्विति** । तत्त्वावेदकप्रमाणप्रमितत्वमुपाधिरिति परिहरति— **तत्राहेति** । टीकागतं सत्तानिर्वचनं प्रकृते संगमयति— **यदुक्तमिति** । चिदात्मनोऽपि सत्त्वमिति । ततश्च प्रकाशमानत्वाविशेषा- ५१ दुभयोरपि देहादिचिदात्मनोः सत्त्वमसत्त्वं वा स्यात् । ततश्च तद्वदेव बाध्यत्वमबाध्यत्वं वा प्रसज्येत, न वैधर्म्यम्; एवं च सति अबाध्यत्वोपाधेः साध्याव्यापकत्वं साधनव्यापकत्वं वा स्यादित्यर्थः । विशेषेति । प्रकाशमानत्वापेक्षया स्वयं प्रकाशमानत्वस्य विशेषत्वादित्यर्थः । ततश्चोपाधेः साध्यव्यापकत्वसाधनाव्यापकत्वे सिद्धे इत्युपपादयति— **स्वयंप्रकाशत्वादित्यादिना** । **दृग्दृश्येति** । अधिष्ठानारोप्यभावव्यतिरेकेण तयोः संबन्धान्तरानिरूपणादित्यर्थः । **संसारस्येति** । देहादिप्रपञ्चरूपस्येत्यर्थः । **शास्त्रप्रामाण्यादिति** । 'भिद्यते हृदयग्रन्थिः' इत्यादिशास्त्रप्रामाण्यादित्यर्थः । ब्रह्मज्ञाननिवर्तनीयत्वाय प्रपञ्चमिथ्यात्ववर्णनमिति तावत्परिहरति— **तत्रेति** । प्रपञ्चो न ज्ञाननिवर्त्यः सत्यत्वादात्मवदित्यनुमानं ज्योतिष्टोमो न स्वर्गफल इत्याद्यनुमानवदागमविरोधादमानमिति शङ्कते— **यत्त्विति** । क्रियात्मन एव सतो ज्योतिष्टोमस्य स्वर्गफलकत्वबोधकागमवदिहापि सत्यस्य सतः प्रपञ्चस्य ज्ञाननिवर्त्यत्वबोधक आगमो यथोक्तानुमानबाधकत्वेनेष्यते ज्ञाननिवर्त्यत्वमात्रबोधको वा; नाद्य इत्याह— **तत्रेति** । द्वितीये मिथ्यात्वमेवायातमित्याह— **प्रत्युतेति** । क्षणिकस्य यागस्य श्रुतस्वर्गसाधनत्वान्यथानुपपत्त्या लोकरीतिमनुसृत्य व्यापारकल्पनवदिहापि श्रुतज्ञाननिवर्त्यत्वसिद्ध्यर्थं बन्धमिथ्यात्वस्यैव सिद्धेः, अन्यथा यागस्य नष्टस्यापि शास्त्रबलेन स्वर्गसाधनत्वोपपत्तेरपूर्वकल्पनं न स्यादिति भावः । अनुमानस्य व्यभिचारमाशङ्कते— **यदपीति** । आदिपदाभ्यां विषयेषु दोषदर्शनं तन्निवर्त्यो रागश्च गृह्यते । स्वमतेन तावद्योग्या परिहरति— **विषादेरिति** । प्रमात्वज्ञाननिवर्त्यत्वं साध्यम् । ध्यानं च मानसी क्रिया, अतो न दोष इति परिहरति— **ध्यानस्य चेति** । **अदृष्टान्तत्वात्** अतुल्यत्वात् । अस- ५२ त्यप्रपञ्चनिवर्तकब्रह्मप्रमित्यतुल्यत्वादित्यर्थः । रागस्यापि भावनयैव निवृत्तिर्न तु दोषज्ञानमात्रेणेति भावः । एवमपि सेतुदर्शननिवर्त्यपापे व्यभिचारः सेतुभ्रममात्रेण पापानिवृत्त्या तस्य प्रमात्वेनैव तन्निवर्तकत्वादित्यत आह— **सेतुदर्शनं चेति** । **न प्रमित्यात्मनेति** । ततश्च प्रमात्वमात्रप्रयुक्तनिवर्तकनाशालिङ्गज्ञाननिवर्त्यत्वं साध्यमिति साध्यस्यापि सत्त्वान्न व्यभिचार इत्यर्थः । न च रजतभ्रमस्य रजतभ्रमेणापि निवृत्तिदर्शनान्न प्रमात्वप्रयुक्तं ज्ञानस्य भ्रमनिवर्तकत्वमिति वाच्यम्, तदधिष्ठानकसकलभ्रमनिवृत्तौ तत्प्रमात्वस्य तन्त्रत्वाभ्युपग-

मात् तत्रापि नान्तरीयकस्य नेदं रजतमिति ज्ञानस्यैव निवर्तकत्वाच्च । ननु सेतुदर्शनवदात्मज्ञानस्यापि 'द्रष्टव्यः' इति विध्यायत्तमेव बन्धनिवर्तकत्वम्, ततश्च सिद्धसाधनमित्यत आह— **आत्मनः प्रमा त्विति** । अधिष्ठानतत्त्वसाक्षात्कारस्य सकलतदध्यस्तनिवर्तकत्वस्य लोके दृष्टत्वेन 'ब्रह्म वेद ब्रह्मैव भवति' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिश्रुतिषु ब्रह्मतत्त्वसाक्षात्कारानन्तरं बन्धनिवृत्तौ विलम्बाभावावगमेन च तस्य प्रमात्वेनैव निवर्तकत्वादित्यर्थः । नन्वेवं विधिवैयर्थ्यमत आह— **तद्धि धेरिति** । जीवस्य ब्रह्मैकत्वसिद्ध्यर्थमपि बन्धमिथ्यात्ववर्णनमित्याह— **यत्त्विति** । **अविवादादिति** । उपाधेर्मिथ्यात्वे तत्परिणामस्य संसारस्यापि मिथ्यात्वादिति भावः । विप्रतिपत्तेरिति । लक्षणानां विरुद्धत्वादित्यर्थः । मतिसंवादार्थैव तदुपन्यास इति परिहरति— **अत आहेति** । तर्हि मतान्तराभिमतख्यातिस्वीकारापत्तिरित्याशङ्क्य प्रकारान्तरेण यथोक्तलक्षणानिर्वाहादर्थादनिर्वचनीयतासिद्धिरित्याह— **एवंलक्षणकत्वं चेति** । तर्हि कथं मतभेद इत्यत ५३ आह— **विप्रतिपत्तिस्त्विति** । सोऽप्यंशो बलादङ्गीकारयितव्य इति भावः । अन्यथाख्यात्यनुवादशङ्कां व्यावर्तयति— **अन्यत्रेति** । तन्मते शुक्त्यादौ रजतादेर्धर्मिण एवारोपादिति भावः । **आत्मख्यातीति** । आत्मनो ज्ञानस्याकारो यो रजतादिस्तस्य बाह्ये ख्यातिरित्यर्थः । **मतभेदेनेति** । बाह्यास्तित्ववादिमते बाह्यं घटादिकमेव भ्रमाधिष्ठानम्, विज्ञानमात्रास्तित्ववादिमते तु बाह्यमलीकमेव तदधिष्ठानमिति विशेषमाहेत्यर्थः । अधिष्ठानज्ञानाभावे कथमारोप इत्याशङ्क्य तत्प्रत्यक्षाभावेऽपि तदनुमानं संभवतीत्याह— **यद्यपीत्यादिना** । **अधिष्ठानमिति** । तज्ज्ञानमित्यर्थः । अधिष्ठानवदाकारोऽपि बाह्यः किमिति न भवेदित्यत आह— **आरोप्यं त्विति** । तैस्तथानभ्युपगमादिति भावः । उपपत्तिस्त्वित्यादिटीकाया एषोऽर्थः— रजतस्य सत्त्वे तस्य ज्ञानाकारत्वे च किं प्रमाणमित्यत आह— उपपत्तिस्त्विति । न तावत्प्रमाणाभावाद्रजतस्यासत्त्वमित्याह— यथादर्शमिति । नापि बाधकादित्याह— नेदमिति । एवं रजतस्य सत्त्वं प्रसाध्य तस्य ज्ञानाकारत्वमर्थापत्त्या साधयति— तथा चेति । अनुमानादिति पक्षं निराकर्तुं तत्रानुमानमिति टीका । तदभिप्रायमाह— **सहोपलम्भेति** । 'सहोपलम्भनियमादभेदो नीलत-५४ द्धियोः' इत्यादिबौद्धकारिकोक्तं यदेन नियतसहोपलम्भं तत्ततो न भिद्यते यथा एकस्माच्चन्द्रमसो द्वितीयश्चन्द्रमा इत्याद्यनुमानं साहित्यस्य भेदाविनाभावात्राभेदसिद्धिरिति निराकरिष्यत इत्यर्थः । प्रतिपत्तुः प्रत्ययाभेदेऽपि रजतस्याहमित्युल्लेखापादने को हेतुरित्यत आह— **प्रतिपत्तुरिति** । एते पञ्चम्यौ ते च समानाधिकरणे इत्यर्थः । **ज्ञानात्मकादिति** । ततश्च तादृशप्रतिपत्रपेक्षया रजतस्यानतिरेकादिति टीकार्थ इति भावः । रजतानुभवः किमान्तरं रजतमान्तरत्वेनैवावगाहते उत बाह्यत्वेनेति विकल्प्य प्रथमं निराकृत्य द्वितीयं शङ्कत इत्याह— **वस्तुत इति** । तर्हि सविकल्पकानुभवस्य भ्रान्तित्वात् कथमनेन रजतसिद्धिरित्यत आह— **भ्रान्तिरूपेति** । सविकल्पकस्य द्वौ विषयौ ग्राह्योऽध्यवसेयश्च । तत्राद्योऽबाधितः स्वलक्षणत्वात्, द्वितीयस्तु बाधितो बाह्यत्वादित्यर्थः । एवमपि रजतमात्रं सिध्येत्, तस्य ज्ञानाकारता कुत इति शङ्कते— **सिद्ध इति** । **प्रागुक्तेति** । बहिर्बाधितमर्थादान्तर इत्यादिनेत्यर्थः । आन्तरत्वप्रतिपत्तिप्रकारस्य दर्शितत्वादसंनिधानेत्यादिपरिहारासामञ्जस्यमाशङ्क्य यदिदमिदंत्वं

प्रतिपिध्यते नेदं रजतमिति, तत्किं पुरोवर्तित्वं बहिष्ठं वा? नाद्य इत्याह— **इदंतेति**। न द्वितीयः, इदंत्वस्य संनिहितत्वरूपत्वेन बहिष्ठरूपत्वाभावादित्याशयेनाह— **अख्यातिमते हीति**। व्यवहारस्यैव बाध इत्यत्र नियामकमाह— **सर्वसंमतस्येति**। रजतज्ञा- ५५ नस्य शुक्तिकायां रजतप्रसञ्जकत्वं शुक्तिविषयकत्वे सत्येव भवति, नान्यथा; ततश्च किं तत्र भासमानत्वाच्छुक्तिका तदालम्बनम् उत पुरोवर्तित्वेन अथ वा तत्कारणत्वेनेति विकल्प्य प्रथमं न हीत्यादिटीकया निराकृत्य द्वितीयं शङ्कते— **ननु मा भान्त्विति**। रजतसंज्ञानस्य शुक्तिविशेष्यकत्वानभ्युपगमेन तत्प्रत्यक्षत्वाभावे शुक्तेस्तत्र साक्षात्कारणत्वाभावात्परम्परया तदुपपादयंस्तृतीयं कल्पमाशङ्कते— **अथेति**। अगृहीतभेदज्ञानद्वयादेव मिथ्याव्यवहारसिद्धेर्न विशिष्टज्ञानावश्यंभाव इति परिहरति— **तत्राहेति**। अर्थमारोपितं प्रतिपिध्येति। रजतज्ञानेन शुक्तिकायां प्रसञ्जितं देशान्तरस्थमेव रजतमारोपितमिति नैयायिकमतसिद्धमारोपितं प्रतिपिध्येत्यर्थः। किं सामग्रीबलाद्व्यधिकरणप्रकारकज्ञानाभ्युपगमः विसंवादिप्रवृत्त्यन्यथानुपपत्त्या वेति विकल्प्य प्रथमम् अपि चेत्यादिटीकया निराकृत्य द्वितीयं शङ्कते— **ननु मिथ्येति**। भेदाग्रहादेव प्रवृत्तिसिद्धेर्न तदर्थं विपर्ययाङ्गीकार इति परिहरति— **तत्राहेति**। ५६ शुक्तित्वस्य विशेषत्वोपपादनार्थं सामान्यग्रहणमित्याशयेन व्याचष्टे— **शुक्तित्वरूपस्येति**। गृहीतमिदमितीति। पूर्वानुभूतत्वरूपतत्ताप्रकाशनस्वभावेत्यर्थः। सत्यरजतज्ञानसारूप्यमुपपादयति— **संनिहितेति**। न गृह्णात इति। विद्यमानस्यापि भेदस्य दोषादग्रहणमिति भावः। व्यवहारनिवृत्तेः स्वकारणभेदाग्रहाभावादेव सिद्धेर्न बाधकज्ञानफलत्वमित्याशङ्क्य परम्परया तदित्याह— **इतरेतरेति**। इतरेतराभावो भेदः; तथा च नेदं रजतमिति बाधकज्ञानेन पुरोव- ५७ र्तिरजतयोर्भेदबोधनादित्यर्थः। विप्रतिपन्ना इति विशेषणवैफल्यमाशङ्क्याह— **सर्वं इति**। संदेहाश्च विभ्रमाश्चेत्यर्थः। ननु ग्रहणस्मरणयोर्विशिष्टज्ञानस्य वा पक्षत्वे अन्यतरमते आश्रयासिद्धिरित्यत आह— **अयथार्थेति**। **नाश्रयासिद्धिरिति**। इदमुपलक्षणम्। साध्यमपि सर्वविषयावच्छेदेन याथार्थ्यं विवक्षितमिति धर्म्यंशयाथार्थ्यमादाय न सिद्धसाधनमित्यपि द्रष्टव्यम्। टीकायां किं तु तस्य रजतादेरिति। तथा च तद्विवेकेति। भाष्यगततच्छब्देन यदध्यास इति यच्छब्दनिर्दिष्टस्य रजतादेरध्यासशब्दोपस्थापितस्याध्यासस्थले मतद्वयसंमतस्य रजतस्मरणस्य च ग्रहणं विवेकप्रतियोगितया च पुरोवस्थितद्रव्यतज्ज्ञानयोरुपस्थितिः विवेकाग्रहोपयोगितया च पूर्वगृहीते रजते तत्तांशप्रमोष उक्तः। ततश्च तयो रजततत्स्मरणयोः शुक्तितज्ज्ञानाभ्यां भेदाग्रहनिबन्धन इति भाष्यार्थ इति भावः। प्रवृत्तिव्यपदेशयोरिदं रजतमिति विशिष्टज्ञानाधीनत्वानभ्युपगमादस्तीति सिद्धवन्निर्देशायोगमाशङ्क्य प्रसाध्यत्वाभिप्रायेण योजयति— **पुरोवर्तिनीति**। टीकायां तौ कथमग्रहणमात्रादिति। सुषुप्तावपि तदापत्तेरिति भावः। स्वरूपतो विषयतश्चागृहीतभेदज्ञानमात्रस्य प्रवर्तकत्वे रजते नेदं रजतमिति ज्ञानादपि प्रवृत्त्यापत्तिरित्यत उक्तं टीकायाम्— समीचीनपुरःस्थितेति। टीकायां तस्मात्स्वसत्तामात्रेण भेदाग्रह इति। पुरोवर्त्यगृहीतासंसर्गकभेदप्रतियोगित्वेनानुपस्थितेज्ज्ञानस्य पुरोवर्तिज्ञानाद्भेदाग्रह इत्यर्थः। टीकायां चेतनव्यवहारस्येति। प्रेक्षावत्प्रवृत्तेरिष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकज्ञानमन्तरेणानुपपत्तेरित्यर्थः। आशयमजानानः शङ्कते टीकायाम्— ननु सत्यमिति।

आशयमुद्धाटयति टीकायाम्— **मैवमिति** । नन्वगृहीतभेदयोर्ग्रहणस्मरणयोरपीष्टतावच्छेदक-प्रकारकत्वात्प्रवृत्तिविषयविशेष्यकत्वाच्च तत एव प्रवृत्त्युपपत्तेर्न विशिष्टज्ञानकल्पने प्रमाणमित्यत आह— **किमगृहीतेति** । रजतस्मरणस्य प्रवृत्तिविषयकत्वाभावात्तद्विषयकेच्छाजन-
५८ कत्वाभावाच्च न तत्र प्रवर्तकत्वमिति परिहरति— **न द्वितीय इत्याहेति** । ग्रहणेऽपि तुल्यमिति । रजतस्मरणस्य पुरोवर्त्यविषयकत्वे तद्विषयकप्रवृत्त्यनुपपत्तिवच्छुक्तिज्ञानस्यापि रजताविषयकत्वे तदिच्छाविरहेण तदर्थिप्रवृत्त्यनुपपत्तेस्तुल्यत्वादित्यर्थः । व्यतिरेकमुखेण सूचितमिच्छायाः पुरोवर्तिन्यावद्यिकत्वमन्वयमुखेनाह— **यदि तदिच्छेदिति** । टीकायां यद्यतथात्वेनेति । पुरोवर्तिनोऽरजतत्वेनाग्रहणाद्रजतार्थिनः पुरोवर्तिनीच्छा जायत इत्यर्थः । टीकायामपक्षधर्मत्वादिति । इदं पुरोवर्तिरजतार्थीष्टसाधनं रजतत्वादिति हेतोः पक्षीभूते शुक्तिकाशकले अविद्यमानत्वादित्यर्थः । टीकायामेकदेशदर्शनमिति । एकदेशविशिष्टतया तद्धर्मिदर्शनमित्यर्थः । टीकायाम् अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिरिति शबरस्वामिवाक्यमुदाहृतम, तद्व्याचष्टे- **ज्ञातसंबन्धस्येति** । लिङ्गलिङ्ग्युभयविशिष्टस्य धर्मिणस्तदन्यतरविशिष्टत्वेनैकदेशत्वं बोध्यम् । समारोपवादिनोऽपि पुरोवर्तिनि रजतत्वाभावादपक्षधर्मत्वं तुल्यमित्याशङ्क्य असता वैशिष्ट्येण तत्र तत्सत्त्वाभ्युपगमान्न दोष इत्याह— **समारोपे त्विति** । फलज्ञानस्य प्रवर्तकत्वमभ्युपेत्य हेतुविशेषणस्य प्रयोजनमाह— **पुरोवर्तिनीति** । नन्वेवं हेतोरसिद्धिः उपायानां नानात्वेन तज्ज्ञानस्यापि नियमेन पुरोवर्तिनि प्रवर्तकत्वाभावादित्याशङ्क्य टीकायां पूर्वग्रन्थोक्तस्येष्टसाधनत्वव्याप्यरजतत्ववदिदमित्येवंरूपस्य रजतज्ञानस्य पक्षत्वात्तस्य च तत्र नियमेन प्रवर्तकत्वान्नासिद्धिः । फलस्य तु रजतजन्योपकारस्य रजतप्रतिग्रहादिनापि सिद्धेर्न तज्ज्ञानस्य नियमेन पुरोवर्तिनि प्रवर्तकत्वमिति
६३ वैषम्यमभिप्रेत्याह— **फलस्य हीति** । स्मरण इति । इष्टसाधनत्वेनानुसंधीयमानगेहगतरजतस्मरण इत्यर्थः । प्रवर्तकत्वमित्यत्र प्रवृत्तिर्न यत्नः, किं तु शरीरचेष्टेत्यभिप्रेत्याह— वाग्वादाविति । इच्छाद्वारा प्रवर्तकत्वं विवक्षितम्, अतो न दोष इति परिहारतात्पर्यमाह— **वाग्वादिर्हीति** । सत्यरजतज्ञाने पुरोवर्तिशुक्तिविषयकत्वाभावेन दृष्टान्ते साध्यवैकल्यमित्यतः सामान्यव्याप्तिरुपन्यस्ता टीकायामिति मन्तव्यम् । इष्टं चेत्यादेरनाकाङ्क्षिताभिधानतां परिहरति— **यद्योक्तमिति** । अनाश्वासः किं प्रवृत्त्यभाव उत प्रामाण्यानिश्चयः? नाद्यः, प्रामाण्यनिश्चयादेव प्रवृत्त्युपपत्तावर्थाव्यभिचारनिश्चयस्य तदहेतुत्वात्; नान्त्यः, अव्यभिचारनिश्चयानधीनत्वात्प्रामाण्यनिश्चयस्येत्युक्तं टीकायाम्; तद्विशदयति— **एवं हीत्यादिना** । किमर्था व्यभिचारापेक्षा करणप्रामाण्येऽपि उत ज्ञानप्रामा-
६४ ण्यमात्रे? नाद्य इत्याह— **व्यभिचारिणामपीति** । अन्त्यव्यभिचारमप्याह— **अव्यभिचारिणामपीति** । **कुतश्चिन्निमित्तादिति** । बाधसत्प्रतिपक्षादिना प्रमानुत्पादकत्वे फलोपहितप्रामाण्याभावादित्यर्थः । एतच्च प्रथमकल्पमात्रे दूषणम् । हेतोरपि सहकारिविरहे कार्याजनकत्वसंभवेन व्यापकव्यभिचारस्यादोषत्वेन च द्वितीयतृतीययोः कल्पनोरदूषणत्वादिति ध्येयम् । द्वितीयं शङ्कते— **भवत्विति** । अव्यभिचार एव ज्ञानस्य प्रामाण्यमिति भावः । **जन्मनैवेति** । जातस्य ज्ञानस्य ज्ञेयानवभासकत्वादर्शनेन तस्य ज्ञेयावभासेऽन्यानपेक्ष-

त्वादित्यर्थः। द्वितीये सत्यमर्थाव्यभिचार एव प्रामाण्यं तन्निश्चयश्च प्रवृत्तावुपयुज्यते। किं तु स्वप्रकाशत्वाज्ज्ञानस्य स्वगतं प्रामाण्यं स्वत एव निर्धार्यत इत्युत्सर्गः। क्वचित्तु बाधकवशादपोद्यते; ततश्च स्वारसिक आश्वासः; बाधकवशात्तु अनाश्वासः; त्वन्मते सर्वप्रत्यययाथार्थ्येऽपि क्वचिद्विशिष्टज्ञानं क्वचिदगृहीतभेदं ज्ञानद्वयमित्यभ्युपगमेनानाश्वासतौल्ये उक्तप्रकारस्यैवानुसरणीयत्वादिति वक्तुं प्रामाण्यस्य परतस्त्वं निराकरोति— अव्यभिचारेति। घटज्ञानगतप्रामाण्यानुमितिजनकीभूतं यत्संवादिप्रवृत्तिजनकत्वादिज्ञानं तत्किं ज्ञानान्तरेण निश्चितप्रामाण्यं सत् स्वविषयं निश्चाययति, उतानिश्चितप्रामाण्यम्, अथ वा स्वत एव निश्चितप्रामाण्यम्? नाद्य इत्याह— ज्ञानान्तरादिति। तत्रापि परतस्त्वावश्यंभावादिति भावः। न द्वितीय इत्याह— अनिश्चये चेति। जनकज्ञानेऽप्रामाण्यशङ्कया तत्रापि तदापत्तेरित्यर्थः। तृतीयं निराकरोति— स्वत इति। अवश्याश्रयणीयत्वादिति भावः। एवं न्यायकणिकोक्तं प्रदर्श्य तत्र समर्थितं स्वतस्त्वं लक्षणप्रमाणाभ्यां प्रपञ्चयितुमाह— नन्विति। स्मृतेः यथार्थत्वेऽपि प्रमाव्यवहाराभावात्तद्वारणायेत्यर्थं स्मृतित्वानधिकरणेत्युक्तम्। बाधात्यन्ताभावः विषयव्यभिचाराभावः। द्वयोरपीति। इदमुपलक्षणम् ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वं ज्ञप्तौ स्वतस्त्वमित्यप्यनुपपन्नम्, तदतिरिक्तानुमितिग्राह्यत्वस्यापि सर्वसंप्रतिपन्नत्वादित्यपि द्रष्टव्यम्। भ्रमप्रमासाधारणकारणातिरिक्तकारणजन्यत्वाभावः प्रमाया उत्पत्तौ स्वतस्त्वं ज्ञानग्राहकसामग्र्यतिरिक्तकारणानपेक्षग्राह्यत्वं यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं वा ज्ञप्तौ स्वतस्त्वमित्यर्थाल्लक्षणसिद्धिमभिप्रेत्य प्रमाणमाह— उच्यत इति। रूपप्रमायाः संयुक्तसमवायान्तर्गतचक्षुःसंयोगजन्यत्वाद्रूपजन्यत्वाच्च बाधवारणायार्थसंप्रयोगत्वानधिकरणेति चक्षुर्गतेति च साध्यविशेषणे। एतच्चानुमानं चक्षुरादिगतदोषाभाव एव प्रमाहेतुरिति मतमाश्रित्य। भूयोवयवेन्द्रियसंनिकर्षादिकमेव प्रमाहेतुरिति मते तु देवदत्तीयरूपप्रमा देवदत्तीयभ्रमप्रमासाधारणरूपज्ञानकारणातिरिक्तरूपज्ञानकारणजन्या न भवति देवदत्तीयप्रमात्वाच्छ्रोत्रजप्रमावदित्यनुमानं द्रष्टव्यम्। न च दोषाभावस्याहेतुत्वे दोषदशायामपि प्रमोत्पत्त्यापत्तिः, असति प्रतिबन्धके सामग्र्याः कार्यजनकत्वात्, प्रतिबन्धकाभावकारणत्वस्य च निष्प्रमाणकत्वादिति भावः। एषा प्रमेति। अगृहीतप्रामाण्या प्रमेत्यर्थः। अनेन स्वतस्त्ववादेऽपि गुणज्ञानेन द्वितीयवारं प्रामाण्यग्रहाभ्युपगमाद्बाधो वारितः। तथाविधेति। गुणज्ञानस्य प्रवृत्तिहेतुत्वं च प्रामाण्यनिश्चयद्वारा बोध्यम्। टीकायां स्मृतिप्रमोषभङ्गस्येति। भ्रमस्थले रजतमित्यादिस्मृतेस्तत्तांशप्रमोष इति यन्मतं तद्भङ्गस्येत्यर्थः। टीकायां विस्तरिष्यति। नेदं रजतमिति निषेधानुपपत्त्यादिप्रपञ्चस्त्वित्यर्थः। सर्वतन्त्रसिद्धोऽर्थ इति। तथा च सिद्धान्त इत्यन्तशब्दोऽर्थपर इति भावः। मिथ्यात्वं विवक्षितमिति। शुक्तिकादेर्मिथ्यारजतात्मत्वाविवक्षायामपि रजतवदवभासत इत्यादिव्यवहारदर्शनेन सादृश्यमिव मिथ्यात्वमपि वतेरर्थ इति भावः। वस्तुतस्तु स्वार्थिको वतिः निश्चयन्यायगणविरोधादित्यादिप्रयोगदर्शनेन स्वार्थिकस्यापि प्रामाणिकत्वात्, ततश्च शुक्तिका रजतमभासीदिति शुक्तिज्ञानेन रजततादात्म्यावगाहनान्मिथ्यात्वसिद्धिरिति ध्येयम्। आह कोऽयामित्यादिभाष्येण कथं पुनरित्याभाष्यस्य पौनरुक्त्यं परिहर्तुं टीकायां पुनरपीत्युक्तम्। तत्तात्पर्यं प्रकटयन्नाह— एव-

७१ **मिति**। प्रकाशत इति पक्षेऽपि किं ज्ञानविषयतया प्रकाशते, उत घटादिसंविदाश्रयत्वेन, अथ वा स्वप्रकाशत्वेन? आद्येऽपि किं स्वसमवेतज्ञानविषयतया स्वग्राह्यत्वं परात्मग्राह्यत्वं वा, नाद्यः आत्मनः स्वसमवेतज्ञानक्रियाजन्यफलशालित्वे कर्मलक्षणाभावेन कर्मत्वाभावे विषयत्वायोगादिति वक्तुं न खलु स एवेत्यादिटीकेत्याह— **नाद्य इत्याहेति**। न चैकस्याप्यात्मन औपाधिकभेदाश्रयणेन कर्मत्वनिर्वाहः कर्तृकर्मभावे स्वरूपभेदस्यैव तन्त्रत्वात्, अन्यथा देवदत्तो देवदत्तं गच्छतीत्यप्यापत्तेः। अत एव मामहं जानामीत्यादावात्मान्तःकरणयोरेव कर्तृकर्मभाव इत्यभिप्रेत्य टीकायां न च तदेव स्वं च परं च विरोधादित्युक्तम्। आत्मान्तरसमवेतज्ञानकर्मत्वे च तदात्मान्तरं ज्ञेयमुत न? नान्त्यः, येन ज्ञेयं तस्यैवात्मत्वापत्त्या ज्ञेयस्यानात्मत्वप्रसङ्गात्। आद्ये तस्याप्यात्मान्तरग्राह्यत्वमित्यनवस्थापत्त्या कस्याप्यात्मत्वं न सिध्येदिति। द्वितीयं दूषयतीत्याह-- **न द्वितीय इत्याहेति**। द्वितीयं कल्पमुत्थापयतीत्याह-- **संविदाश्रयत्वेनेति**। ननु टीकायामात्मनो न संविदाश्रयत्वं संभवति चिद्रूपत्वप्रतिपादकश्रुतिविरोधादित्युक्त्वा तत्रापि ज्ञानाश्रयत्वमेवोच्यत इत्यादिशङ्काव्युदासाय चिद्रूप एव ब्रह्मणि श्रुतीनां तात्पर्यमिति दर्शयितुमुक्तमुपपद्यते चेति। तथा हीत्यादिना च संविरस्वप्रकाशत्वादिकमन्यदेवोच्यते नात्मनश्चिद्रूपत्वमित्याशङ्क्य संविदः स्वप्रकाशत्वं प्रसाध्य ततो भिन्नस्य जडस्य कथंचिदपि प्रकाशानुपपत्त्या तद्विवर्ततया तदभेदेनैव प्रकाशावश्यंभावेन सकलजगद्विवर्ताधिष्ठानतया श्रूयमाणस्य ब्रह्मणो युक्तमेव जन्मादिविकाररहिताभिन्नस्वप्रकाशसंविद्रूपत्वमिति वक्तुं स्वप्रकाशत्वाद्युपपादनमित्याह-- **स्वप्रकाशफलस्येति**। स्वप्रकाशस्य फलस्य स्फुरणस्येत्यर्थः। वृत्तिरूपस्य तु ज्ञानस्य जडत्वमेवेति भावः। प्रकाशो जड इति पक्षेऽपि किमर्थात्मनोस्तस्मादेव प्रकाशात् स्फुरणम् उत स तज्जनिताज्ज्ञानात्? नाद्य इत्याह टीकायाम्– जडत्वादिति। ननु जडत्वाविशेषेऽपि स्वच्छत्वास्वच्छत्वादिविशेषवत्प्रकाशकत्वतदभावविशेषोऽपि स्यादित्याशङ्क्य प्रकाशैकलोलीभावेन विना कस्यापि प्रकाशादर्शनान्नैवमित्याह टीकायाम्– अविशेषादिति। अस्तु ततः किम्? तत्राह टीकायाम्— प्राप्तमिति। ततश्चेति शेषः। आभाणको लोकगाथा। नान्त्य इत्याह टीकायाम्— न च निलीनमेवेति। अथानवस्थापरिहाराय दूरं गत्वा ज्ञानं स्वप्रकाशमिष्यते तदा आदावेवास्त्वित्याशयेनाह टीकायाम्— तस्मादिति। तथापीत्यादिटीकाग्रन्थस्य परिहारग्रन्थत्वात्तद्व्यावर्त्यां शङ्कामाह—
७३ **नन्वभ्युपेयत इति**। टीकायां किमायातमिति अन्यस्य स्वयंप्रकाशत्वमात्रेणान्यस्य प्रकाशेऽतिप्रसङ्गादिति भावः। संबन्धो नियामक इति शङ्कते टीकायाम्— एतदायातमिति। किं सापेक्षत्वमात्रं संबन्धः, उत नित्यसापेक्षत्वम्, अथ वा तद्धर्माविनाभूतधर्मकत्वम्? आद्यं निराकर्तुं तत्किमित्यादिटीका, तदभिप्रायं प्रकटयन्नेव द्वितीयमुत्थापयति— **अर्थात्मसंब-**
७४ **न्धिन्यामित्यादिना**। वैषम्यमेवाह— **आश्रयेति**। पितापुत्रयोः स्वरूपेण नित्यसापेक्षत्वाभावेऽपि पितृत्वादिविशेषेण तदस्तीति परिहारतात्पर्यमाह— पुत्रगतेति। टीकायां सद्दार्थात्मेत्यादिना अर्थात्मप्रकाशाविनाभूतप्रकाशशालित्वं संबन्ध इति तृतीयं कल्पमाशङ्क्य तत्किमित्यादिना स निराकृतः। तत्र संविदर्थात्मनां त्रित्वात् प्रकाशाविति द्विवचनायोगमाशङ्क्य द्वयोरप्यर्थात्मनोर्जडत्वेनैकीकाराम्न दोष इति दर्शयन्किंशब्दसूचितं विकल्पं विशदयति— **अर्था-**

**त्मनोरिति** । तथा चेत्यादिटीकोक्तं दोषद्वयं विशदयन्ननिष्टपर्यवसायितामाह— **संविद इति** । द्वितीयं शङ्कत इत्याह— **अभेदमाशङ्कत इति** । टीकोक्तां विवक्षितार्थासिद्धिमुपपादयति— **संविदतिरिक्तेति** । **अनुपयोग उक्त इति** । अर्थस्य प्रकाशमानतायां सद्भावस्यानुपयोग उक्त इत्यर्थः । उत्तरत्र हानादीनामतीतादिविषयत्वशङ्कनादिह तद्विषयत्वं बुद्धिविशेषणमित्याशयेनाह— **तद्विषयाश्च ता इति** । **हेताविति** । साध्ये तु बाधः स्फुट इति भावः । **तां परिहरतीति** । विशेषणासिद्धिं परिहरति । शङ्कादृढीकरणायेत्यर्थः । किं तद्विषयकत्वमात्रं तत्प्रकाशत्वे तन्त्रम् उत प्रकाशत्वविशेषितम् अथ वा तदभिन्नप्रकाशत्वम् ? नाद्यः, प्रयत्नवदात्मशरीरसंयोगस्यापि तद्विषयहानादिप्रवृत्तिजनकत्वेन तद्विषयतया तत्प्रकाशत्वापत्तेरित्युक्तं टीकायां तत्किमित्यादिना । तत्रैतद्दोषभिया तद्विषयकहानादिजनकत्वं न हानादिबुद्धीनां तद्विषयत्वे तन्त्रम्, हानादीनामपि तद्विषयत्वासिद्धेरिति यद्युच्येत तर्हि विशेषणासिद्धिरिति टीकाभिप्राय इत्याह— **अर्थविषयेति** । द्वितीयतृतीयनिराकरणपरतया नन्वयमित्यादिटीकां व्याकरोति— **प्रयत्नवदिति** । **अर्थे त्विति** । स्वभिन्नेऽर्थे जडरूपैव संवित्, संविदः प्रकाशरूपतायां संविदभेदस्यैव तन्त्रत्वादिति भावः । टीकासूचितं तृतीयकल्पनिराकरणं प्रकटीकुर्वन्नाह— **अर्थस्यापीति** । अध्यासाक्षेपवादिना तस्मादित्यादिना प्रपञ्चानिर्वचनीयत्ववर्णनमयुक्तमित्यत आह— **सिद्धान्त्यभिमतामिति** । प्रकाशभेदनिरसनस्य फलं दर्शयन्नाह— **एवमिति** । टीकायां किं प्रकाशस्य स्वतो भेद उतोपाधितः, नाद्यः, सर्वेषामपि पुरुषाणामनुभवामीत्यनुभवांशे एकाकारतावभासनेन भेदाप्रतीतेः, न चायमेकाकारप्रत्ययो जात्यैक्यनिबन्धनः, लाघवेन व्यक्त्यैक्यविषयकत्वस्यैव कल्पनीयत्वात् । न चैवमिच्छामीत्याद्यनुगतप्रत्ययादिच्छादीनामप्येकत्वापत्तिः, मम तदिच्छा नष्टा इदानीमेतदिच्छा समुत्पन्नेत्युत्पत्तिविनाशानुभवेन वैषम्यात्ज्ञाने उत्पत्तिविनाशानुभवस्य तदवच्छेदकवृत्तिविषयत्वात् । न चैवमिच्छायामप्युत्पत्तिविनाशानुभवस्य वृत्तिविषयत्वम्, तत्र वृत्त्यभावाज्ज्ञानस्य सच्चिदानन्दाद्वितीयात्मरूपतया तदुत्पत्तिविनाशनानात्वानुभवनिर्वाहार्थमवच्छेदकवृत्त्यभ्युपगमेऽपि स्वरूपेणैवोत्पत्तिविनाशाद्यनुभवयोग्यायामिच्छायामवच्छेदकवृत्तिकल्पनस्य निष्प्रमाणकत्वादित्याशयेनाह टीकायाम्— **न चास्येति** । द्वितीये स उपाधिः किं मिथ्या उत सत्यः? नाद्यः, अध्यस्तरङ्गरजतादिभेदेऽपि शुक्तिभेदादर्शनेन मिथ्योपाधेरधिष्ठानाभेदकत्वादित्याह— **न चेति** । नान्त्यः, प्रपञ्चसत्यत्वस्य निराकरिष्यमाणत्वादित्याह टीकायाम्— **अपि चेति** । कालमात्रस्य पक्षत्वे जाग्रत्स्वप्नयोर्वृत्तिसाक्षात्कारेण सिद्धसाधनं स्यादित्यत उक्तं **सुषुप्तिकाल इति** । न च सुषुप्तावपि तमादायार्थान्तरम्, तत्र मनसो लयश्रवणेन तदानीमहंवृत्त्ययोगात् । न च सुखमहमस्वाप्समिति परामर्शानुपपत्तिः, सुषुप्तिकालसाक्षात्कृतप्रत्यगात्मगोचरे परामर्शे तत्कालसमुद्भूतसाक्ष्यध्यस्ताहमर्थानुरागसंभवादित्याशयेनाह— **न च सुषुप्ताविति** । **न च पुरुषान्तरमिति** । **विशेषणीयमिति** । अयोग्यनीश्वरसाक्षात्कारवानिति विशेषणीयमित्यर्थः । **तदर्थेति** । प्रातिलोम्यमेवेत्यर्थः । कथंशब्दे किंशब्दसद्भावं प्रकटयति— **कथमिति** । थमुप्रत्ययान्तस्येति । 'किमश्च' इति सूत्रेण किंशब्दात्थमुप्रत्यये 'किमः कः' इति सूत्रेण किंशब्दस्य कादेशे च कथमिति रूपमि-

७५ ७६ ७७ ७८

त्यर्थः । ननु टीकायां सर्वो हीति भाष्यमुपात्तम्, तदस्वप्रकाशत्वपक्षे दूषणाभिधानसमर्थम् एतदुक्तं भवतीत्यादिना च स्वयंप्रकाशत्वपक्षे दूषणमुच्यते, ततश्च भाष्यविरोध इत्याशङ्क्य पूर्वभाष्ये प्रत्यगात्मनीति विशेषणसूचितम् स्वप्रकाशत्वपक्षे दूषणं विशदीकुर्वन्सर्वो हीति-भाष्योक्तमस्वप्रकाशत्वपक्षे दूषणं सदातनेऽपीत्यादिना दर्शयतीत्याशयेनाह— **अप्रधानत्वपक्ष इति** । ननु स्वप्रकाशत्वरूपमत्यन्ताग्रहणं सर्वदा प्रकाशराहित्यरूपम्; अत्यन्ताग्रहणं च नेष्यते, किं तु तद्विषयकेण ज्ञानेन प्रकाशमानत्वमेव, ततश्च नाध्यासविरोध इति शङ्कते टीकायाम्— स्यादेतदिति । आत्मनो ज्ञानविषयत्वे दृश्यत्वेनेदंकारास्पदत्वेन च मिथ्यात्वादनात्मत्वापत्तेस्तस्यापि ज्ञानस्य ज्ञानान्तरविषयत्वेऽनवस्थापत्तेश्च कस्यचित्स्वप्रकाशत्वावश्यंभावे आत्मन एव तद्युक्तमिति परिहारभाष्यभिप्रायमाह टीकायाम्— विषयत्वे हीति । उच्यत इत्यादिभाष्यव्याख्याने बीजं दर्शयति— **भाष्यकारेणेति** । स्वतोविषयत्वमित्यत्र अविषयत्वमिति

७९ च्छेदः । **स्वत एवेति** । ततश्च विषयत्वाविषयत्वे उभे अप्यंशभेदेन स्वत एव स्तामिति भावः । चिद्रूपे भातीति सप्तम्यन्तम् । किमानन्दादिभाने प्रमाणाभाव इत्याशय उत तद्भाने तदुल्लेखोऽपि स्यादिति अथ वा तदुल्लेखरहितं तद्भानं दृष्टविरुद्धमिति ? नाद्यः, आनन्दादेश्चिद्रूपाभेदेन तद्भाने भानावश्यंभावात्, न हि संभवति घटत्वं भासते कलशत्वं न भासत इत्याशयेनाह— **नेत्याहेति** । द्वितीयमाशङ्क्य निराकरोति— **न हीति** । न तृतीय इत्याह— **यथा खल्विति** । पूर्वदृष्टस्य देवदत्तादेः पुनर्दर्शने अयं देवदत्त इत्यादौ तदैक्यमपि विषयः उत्तरकालं स वा अन्यो वेति संशयादर्शनात् । अथापि सोऽयमित्येवं तत्तायनुल्लेखेन स्पष्टं न भासत इव । तथैव स्वरूपानन्दस्फूर्तावपि संसारदशायां दुःखसंमिश्रतया तत्प्रत्यनीकत्वेनाग्रहणाद्भ्यस्ता... न तदुल्लेखः, तद्ग्रहणदशायां तु भवत्येव कथंचिदु-

८० ल्लेखः, सुखं वनं सुखमहमस्वाप्समिति चेति भावः । **तत्र विद्यमानत्वादिति** । तदात्मना विद्यमानत्वादित्यर्थः । ननु बुद्ध्यादिभेदस्य कथमनिर्वचनीयत्वमबाध्यत्वादित्याशङ्क्य तस्यापि ब्रह्मज्ञानबाध्यत्वमेवमित्यानन्दादिवैषम्येणाह— **आनन्दादीनामिति** । आदिशब्देन नित्यत्वविभुत्वादीनां ग्रहणम् । चिदात्मनश्चैतन्यकर्मत्वलक्षणं विषयत्वमसिद्धमिति परिहरति— **तत्राहेति** । कथं तर्हि चिदात्मनोऽहमिति विषयत्वानुभवः, तदभावे वा कथं तद्व्यवहारः; ततश्च विषयत्वे युष्मत्प्रत्ययविषयत्वादनात्मत्वे अहमित्यस्मदुल्लेखश्च न स्यादित्याशङ्क्य योऽयमहमर्थे इदमंशोऽन्तःकरणं तदात्मना विषयत्वानुभवः, ततश्च न व्यवहारानुपपत्तिः, अनिदमात्मकचिद्रूपत्वेनास्मदुल्लेखश्चोपपद्यत इत्याह— **इदमात्मकत्वेनेति** । ततश्च टीकोक्तमनिदमात्मनो विषयत्वमस्मत्प्रत्ययार्थानव्यवहारयोग्यत्वमिति भावः । **तद्धर्मान्वयेति** । इदमंशधर्मः कर्तृत्वादिः, अनिदमंशधर्मश्चौदासीन्यमित्यर्थः । नन्वहंप्रत्यये किमित्यंशद्वयं कल्प्यते जीवब्रह्मणोर्भेदेन कर्तृत्वादिरहंप्रत्ययविषयस्य जीवस्य धर्मः, औदासीन्यं तु वेदान्तप्रतिपाद्यस्य ब्रह्मण एव धर्म इति कुतो न भवेदिति शङ्कते— **नन्विति** । ब्रह्मणा 'अनेन जीवेनात्मना' इति जीवस्य स्वरूपत्वेन कीर्तितत्वात् 'तत्त्वमसि' इत्यादिश्रुतिशतेभ्यश्च

८१ न जीवब्रह्मभेदोऽभ्युपगन्तुं युक्त इति परिहरति— **तत्राहेति** । टीकायां गृहीतभाष्यभाववर्णनम् जीवो हीति । अविषय इति च्छेदः । ननु स्यादेतदित्यादिशङ्कायां किं तु प्रत्यगात्मा

न स्वतो नापि परतः प्रथते इत्युक्तम्, तदयुक्तम्, स्वप्रकाशत्वाभ्युपगमविरोधादित्याशङ्क्य मतभेदान्न दोष इत्याशयेनाह— **स्वप्रकाश इति**। अप्रकाशसमर्थनेनेति । अखण्डानन्दादिस्वरूपस्येति शेषः। सर्वथा अप्रकाशमानत्वे प्रत्यगात्मनि कुतोऽध्यास इत्यध्यासाक्षेपायोगमाशङ्क्याह— **अपरोक्षत्वेति**। प्रकाशमानमात्रे किमित्यध्यासो न भवेदित्यत ८२ आह— **अपरोक्षेति**। शुक्त्यादौ तथा दर्शनादिति भावः। रूपस्पर्शविरहादिति हेतौ ८३ रूपस्पर्शपदयोरन्यतरवैयर्थ्यमाशङ्क्याह— **रूपरहितेति** । द्वितीय एवेति । प्रथमहेतोस्तत्र व्यभिचारादिति भावः । टीकायामविवेकिन इत्यस्य व्याख्यानं परदर्शितेति। टीकायां पार्थिवच्छाया तमः, तद्गतां श्यामतामित्यर्थः । मलिनतादीत्यादिशब्दनिर्दिष्टस्य शुक्लरूपस्याप्यध्यासं दर्शयति टीकायाम्— कदाचिदिति । उभयत्राप्यध्यासलक्षणयोगादध्यस्यन्तीति भाष्यमुपपन्नमित्याशयेनाह टीकायाम्— तत्रापीति । तलत्वाध्यासं विशदयति— तदेवेति । नभ एव तलरूपमध्यस्यतीत्यर्थः। आत्माध्यासस्यैव प्राधान्येन निरूपणेऽविद्यारूपत्वं हेतुरुक्तो भाष्ये । तत्र हेतोरप्रयोजकत्वं निराकरोति टीकायाम्— अविद्या हीति । रज्जुसर्पादिविभ्रमाणामप्यनर्थहेतुत्वेनाविद्यात्वादविशेषमाशङ्क्य तेषामनर्थहेतुत्वमनात्मन्यात्माध्यासाधीनमिति तस्यैव सर्वानर्थहेतुत्वमित्याशयेनाह टीकायाम्— प्रत्यगात्मनीति । तर्हि अनर्थहेतुत्वादेव तन्निरूपणं वृथेत्यत आह— तत्स्वरूपं त्विति । एवंलक्षणमिति भाष्ये एवंशब्देन जीवानुभवपरामर्शादनर्थहेतुतोक्तेति दर्शयति टीकायाम्— यस्मादिति। अशनाया बुभुक्षा। आदिशब्देन पिपासादिकं गृह्यते। **दुःखाकरोतीति**। 'दुःखात्प्रातिलोम्ये' ८४ इति सूत्रेणाभूततद्भावे डाच्प्रत्यये रूपम्। ततश्च अदुःखिनं दुःखिनं करोतीति तदर्थः। तत्र प्रत्यगात्मनि दुःखस्य सर्वानुभवसिद्धत्वाददुःखिनमित्ययुक्तमित्यतो व्याचष्टे— **वस्तुवृत्तेन इति**। टीकायाम्— अत इति । पृथग्जनैरध्यासत्वेनाममननादित्यर्थः। तद्विवेकेनेति भाष्येण प्रत्यगात्मनो बुद्ध्यादिभ्यो भेदग्रहस्य वस्तुस्वरूपावधारणे उपयोग उक्तः । तत्र विवेकग्रहे सामग्रीं दर्शयन्नुपयोगप्रकारं दर्शयति टीकायाम्— प्रत्यगात्मनीत्यादिना। बुद्ध्यादिभ्यो निविक्त इत्यन्वयः । ननु टीकायां विद्यायाश्चिदात्मरूपत्वमुक्तमयुक्तं भाष्यविरोधात् स्वरूपस्य सदातनत्वेनाविद्यानिवर्तकत्वायोगाच्चेत्यत आह— **वस्तुस्वरूपं च तदिति** अभिव्यक्तमिति । अखण्डाकारवृत्त्यभिव्यक्तमित्यर्थः। ततश्च स्वरूपमात्रस्याविद्यानिवर्तकत्वाभावेऽपि सूर्यकान्तसंलग्नस्य सौरतेजस इव वृत्त्यभिव्यक्तस्य दाहकत्वमुपपद्यत इति भावः। तन्कृतेनेति भाष्ये तच्छब्देनाधिष्ठानारोप्ययोरुभयोरपि ग्रहणमित्यभिप्रेत्य व्याचष्टे टीकायाम्— अन्तःकरणादीत्यादिना। एवमपि वासनावशात्पुनरुद्भविष्यतीत्यस्य कः परिहार इत्याशङ्क्य भाष्ये अणुमात्रेणापीत्यनेन वासनाया अपि निवृत्तिरुक्तेति दर्शयति टीकायाम्— एतदुक्तं भवतीत्यादिना। ननु मिथ्याप्रत्यय एव तत्त्वावधारणं किमिति नापनयेदित्यत आह टीकायाम्— तत्त्वपक्षपातो हीति। वस्तुतत्त्वपक्षपात इत्यर्थः। हिशब्देन धियां वस्तुतत्त्वविषय एव दृढकार्यजनकत्वेन तत्प्राबल्यलक्षणः पक्षपातो लोकसिद्ध इति दर्शितम् । वस्तुतो निरुपद्रवस्यापि भूतार्थस्य तदनिर्णये विपर्ययैर्बाधो दृश्यत इत्यत आह-- **भावनाप्रकर्षादिति**। बाह्याः खल्वेवमाहुः— सर्वमिदं क्षणिकमिति भावनया अनादिस्वकल्पना निवर्तते;

शुद्धस्वलक्षणमिति भावनया द्रव्यगुणशब्दकर्मविशेषणविशेष्यकल्पना विनश्यन्ति; दुःखमिति भावनया रागादिदोषप्रवृत्तिसुखदुःखोपप्लवाः क्षीयन्ते; शून्यमिति भावनया विषयोपप्लवविगमः; ततश्च भावनाभेदैश्चतुर्भिश्चतुर्विधसंस्कारविरोधिभिश्चतुर्विधेषूपप्लवेषु क्रमेणाभिभूतेषु भावनाप्रकर्षपर्यन्तात्समनन्तरप्रत्ययात्सर्वोपप्लवविरहितं चरमं विज्ञानमुत्पद्यत इति; तदेतदाह— **भावनाप्रकर्षाद्विशदाभमिति** । विशदा स्फुटा आभा स्फूर्तिर्यस्य तदित्यर्थः । **सर्वविषयमिति** । सामस्त्येन नैरात्म्यविषयमित्यर्थः । ननु ज्ञानस्य यथाभूतकृत्स्नवस्तुविषयकत्वे भवेत्प्राबल्यम्; तदेव तु नास्ति; तथा हि— ज्ञानं न सर्वविषयं सातिशयत्वात्; न च हेत्वसिद्धिः, भावनाजन्यत्वेन तत्सिद्धेः, नैरात्म्यादिभावना सातिशयकार्यजनिका अभ्यासत्वाल्लङ्घनाभ्यासवत् इत्याशयेन शङ्कते— **नन्विति** । सातिशयप्रयत्नजन्यत्वमुपाधिरित्याशयेन परिहरति— **इति शङ्कामिति** । उपाधेः साध्यव्यापकत्वसाधनाव्यापकत्वे दर्शयति— **लङ्घनाभ्यासे हीत्यादिना** । किं च नैरात्म्याद्यभ्यासो निरतिशयोत्कर्षशालिकार्यजनकः अभ्यस्यमाने पूर्वकार्यजनकप्रयत्नाधिकप्रयत्नानपेक्षत्वे सत्युत्कृष्टकार्यजनकाभ्यासत्वात् सुवर्णपुटपाकाभ्यासवदित्यनुमानादपि ज्ञानस्य सर्वविषयत्वसिद्धिरित्याह—

८५ **वैशद्याधिक्यं चेत्यादिना** । ननु पौनरुक्त्यपरिहारार्थमहमिदं शरीरादीत्याद्यभिलपनलक्षणव्यवहार एव तत्रोक्त इत्यभ्युपगमे प्रवृत्तिलक्षणव्यवहारस्याप्यध्यासाधीनतया तदनुक्तौ न्यूनतापत्तिरित्याशङ्क्य अहंममाध्यासाभिलापस्य सर्वलोकप्रसिद्धत्वात्प्राथमिकत्वाच्च स एव तत्र कण्ठरवेणोक्तः, प्रवृत्तिलक्षणव्यवहारस्तु तत्र सूचित इति नानुक्तिदोष इत्याशयेनाह टीकायाम्— इतिशब्दसूचितमिति । टीकायाम्— निगदव्याख्यानमिति । निगदो निगदनमुच्चारणं तदेव व्याख्यानं यस्येत्यर्थः । स्पष्टार्थमेतदिति भावः । ननु तत्त्वपरिच्छेदो हीत्यादिटीकया कथं पुनरित्यादिभाष्यस्य विद्याविद्ययोर्विरोधान्नाविद्यावद्विषयत्वं प्रमाणानामित्याक्षेपाभिप्रायो वर्ण्यते; तदयुक्तम्, उच्यत इत्यादिपरिहारभाष्ये अविद्यायाः प्रमाणप्रवृत्तावुपयोगकथनेन शङ्कया अनुपयोगपरत्वौचित्यादित्याशङ्क्य विरोधानुपयोगोभयाभिप्रायतया भाष्यं व्याख्यातुमियं टीकेत्यभिप्रेत्य विभज्य व्याचष्टे— **प्रमाकरणानीत्यादिना । विरोधाभिप्रायमिति** । विद्याया अविद्याविरोधित्वादित्येवमाक्षेपाभिप्रायम् इत्यर्थः । अत एव वक्ष्यति अनेन नाविद्यावन्तमिति ग्रन्थस्य आक्षेपः परिहृत इति । अहंममाभिमानहीनस्येति भाष्यपदम् । तत्राहममभिमानहीनस्येत्यंशं व्याचष्टे तादात्म्याध्यासहीनस्येत्यंशेनेत्यर्थः । टीकायाम्— प्रयोजनीयामिति । प्रेरणीयमित्यर्थः । प्रमाणप्रवृत्त्यनुपपत्तेरिति

८६ भाष्ये अविद्यावद्विषयाणि प्रमाणानीत्यनुपपन्नमभिप्रेत्याह टीकायाम्— भवत्यविद्यावत्पुरुषविषयत्वमिति । अत्र च विषयत्वमाश्रयत्वं विवक्षितमित्याशयेनाह टीकायाम्— अविद्यावत्पुरुषाश्रयत्वमिति । प्रमाणानामविद्यावत्पुरुषविषयत्वमाक्षिपता आत्माधिष्ठितानां प्रमाणानां प्रवृत्तिरित्यभ्युपगम्यते उत प्रवृत्तिरेव नेति अथ वा अनधिष्ठितानामेव प्रवृत्तिरिति विकल्पं मनसि निधाय प्रथमं देहेन्द्रियादिष्वित्यादिभाष्यव्याख्यानेन निराकृत्य द्वितीयमुत्थापयति टीकायाम्— अर्थेति । अनुपादाय अप्रवर्त्य । इन्द्रियादीनामप्रेरणेऽप्यभिलपनलक्षणव्यवहारसंभवाद्भाष्यायोगमाशङ्क्य व्यवहारशब्देन प्रमितिरुच्यत इत्याह टीकायाम्— व्यवह्रियत

इति । दण्डिनो गच्छन्तीत्यत्र कस्य पदस्य कुत्र लक्षणा अन्वयानुपपत्त्यभावाच्च किमर्थं लक्षणेत्यतस्तद्विशदयति— **यथेति** । तथा च दण्डिशब्दस्य दण्ड्यदण्डिपरतया प्रयुक्तत्वात्तात्पर्यानुपपत्त्या लक्षणेति भावः । दण्डिशब्दस्थले समुदाय इव प्रकृते प्रमाणत्वं लक्ष्यतावच्छेदकमित्याशयेन प्रमाणपदं प्रयुक्तमिति ध्येयम् । किं कर्तृभावेन क्त्वाप्रत्ययानुपपत्तिः उत तस्य समानत्वाभावेन ? नाद्य इत्याह— **अर्थाक्षिप्तेति** । द्वितीयं शङ्कते— **अनुपादायेति** । अव्यवहितेन व्यवहारेणैवानुपादायेत्यस्य संबन्धो न व्यवहितेनासंभवेनेति परिहारटीकाभिप्रायमाह— **नैवमिहेति** । तृतीयेऽपि किं प्रमाणानामधिष्ठितत्वमात्रं व्यावर्त्यमुतात्माधिष्ठितत्वमिति विकल्प्य प्रथममुत्थापयितुं किमिति पुनरित्यादिटीका । तां मतद्वयपरतया विभज्य व्याकरोति— **किमिति पुनरिति सांख्यस्य शङ्केति** । उपादत्त ८७ इत्यात्मनेपदात्क्रियाफलस्य कर्तृगामित्वावगमेन स्वप्रयोजनार्थं प्रमाता प्रमाणानि किमित्युपादत्ते ? प्रमाणान्येव प्रमात्रर्थं प्रवर्तन्तामिति शङ्कातात्पर्यपर्यवसानादिति भावः । एवं च सति अथ स्वयमेवेति न तदुपपादनपरो ग्रन्थः एवकारस्वारस्यबलेन प्रयोजनानुद्देशेन स्वत एव प्रवर्तन्तामित्येवंपरत्वात्तस्य, तथा च स्वभाववादिनः शङ्केत्याशयेनाह— **अथेति** । टीकायाम्— मा भूदिति । कुविन्दरहितेभ्यो वेमादिभ्यः पटोत्पत्तिर्मा भूत् नासीदित्यतो हेतोर्न व्याप्रियन्त इत्यन्वयः । द्वितीयमुत्थापयितुमथ देह एवेति टीका; तां देहातिरिक्तमात्मानमनङ्गीकुर्वतश्चार्वाकस्य मतमुत्थापयतीत्येवंपरतया योजयति— **अथेति** । टीकायाम्— कृतमत्रेति । इन्द्रियाद्यधिष्ठातृत्वसिद्ध्यर्थं देहे आत्मनस्तादात्म्याध्यासेनालमित्यर्थः । इदानीमात्मनो देहाद्यधिष्ठातृत्वेऽपि न तत्तादात्म्याध्यासापेक्षेति नैयायिकमतमुत्थापयति टीकायाम्— स्यादेतदिति । देहादेः प्रेर्यत्वसिद्ध्यर्थमात्माध्यासानपेक्षणेऽप्यसङ्गस्यात्मनः प्रेरकत्वसिद्ध्यर्थं व्यापारवत्त्वाय तदपेक्षेति परिहारभाष्याभिप्रायमाह टीकायाम्— व्यापारवन्तो हीति । न च प्रमातृत्वमन्तरेणेति भाष्यं यद्यपि पूर्वभाष्यशेषत्वेन प्रतीयते तथापि प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति भाष्येण पौनरुक्त्यं परिहर्तुं युक्त्यन्तरपरतया व्याख्यायत इत्याह— **एवं प्रमाणेति** । व्यतिरेकमुखेण सूचितमध्यासावश्यकत्वमन्वयमुखेनाह— **यदि चिदात्मेति** । **प्रमाश्रयत्वं हीति** । यद्यपि प्रमातृत्वानुपपत्ताविति ८८ भाष्यव्याख्यानावसरे प्रमाकर्तृत्वं प्रमातृत्वमित्युक्तं टीकायाम्, तथापि प्रमाणप्रेरकत्वेनाध्याससमर्थनार्थं तत्र तथोक्तम्, इह तु चिदचित्संवलनरूपप्रमाया एकैकाश्रयत्वानुपपत्त्या मिलिताश्रयत्वावश्यंभावनाध्याससमर्थनार्थमेवं व्याख्यातम्; अत एव टीकायां पूर्ववाक्ये चिदात्मकर्तृत्वमिति प्रमाश्रयत्वमेवोक्तमिति भावः । तामेव चेति टीकाया वैयर्थ्यमाशङ्क्य पूर्वोत्तरटीकयोः प्रयोजनभेदमाह— **अनेनेत्यादिना** । नाविद्यावन्तमित्यादिग्रन्थेन यो विद्याविद्ययोर्विरोध उक्तः स चिदचित्संवलनोक्त्या विरोधाभावेन निरस्तः, तत्त्वपरिच्छेदो हीत्यादिनोक्तश्चानुपयोगस्तदुपयोगकथनेन निरस्त इत्यर्थः । न च प्रमातृत्वमन्तरेणेति भाष्यस्य प्रमातृत्वानुपपत्ताविति भाष्येणापुनरुक्तमर्थं दर्शयितुं प्रमातृत्वेन चेति टीका । तत्र व्याख्याबीजमाह— **अनुपलक्षणे हीति** । अत्रत्येन प्रमातृत्वेन यदि प्रमाणप्रेरकत्वमुच्येत, ८९ तर्हि स्पष्टमेव पौनरुक्त्यम् । अथ तदनुकूला शक्तिस्तर्हि तस्या अतीन्द्रियायाः प्रेरणानु-

मेयतया प्रथमोपस्थितप्रेरणस्यैवाध्यासकल्पकत्वे पौनरुक्त्यतादवस्थ्यमित्यर्थः। प्रमापरत्वे तु नायं दोष इत्याह-- **प्रमा त्विति**। भाष्ये अविद्यावद्विषयाण्येवेत्येवकारानुपपत्तिरिति शङ्कते टीकायाम्-- स्यादेतदिति। किं विद्वद्व्यवहारमात्रेऽयमध्यासहेतुकत्वाक्षेप उत तदीये कर्मज्ञानकाण्डव्यवहारे? पक्षद्वयेऽपि किं देहादिव्यतिरिक्तात्मज्ञाने तत्तादात्म्याध्यासासंभवादिति हेतुरभिमत उत तदध्यासपूर्वकत्वे मानाभावादिति? नाद्यः, तस्यापातज्ञानत्वेन तदध्यासानिवर्तनाक्षमत्वादित्याह टीकायाम्-- विदन्तु नामेति। न द्वितीयः, देहघातार्थसमागच्छत्खड्गिदर्शनजनितपलायनानुमितमरणभयवत्त्वेन पश्वादिवत्तदध्यासानुमानादित्याह टीकायाम्— प्रमाणप्रमेयव्यवहारे त्विति। शास्त्रीयव्यवहारे पारलौकिकफलभोक्तृनिश्चयावश्यंभावेऽपि तस्य स्पष्टं देहादिभेदाविषयकतया तत्तादात्म्याध्यासानिवर्तकत्वाद्देहधर्मब्राह्मणत्वादिमत एवात्मनोऽधिकारश्रवणाच्च सिद्धं तस्याप्यध्यासपूर्वकत्वमित्येवं द्वितीयं पक्षं निराकर्तुं तं पक्षमुत्थापयति टीकायाम्— स्यादेतदिति। उद्देशत्यागात्मकेति। स्वत्वत्यागस्य स्वामिनैव कर्तव्यत्वादिति भावः। इदमुपलक्षणम्। फलप्रतिग्रहयोग्यतापादकतपःप्रभृतीनामपि

९० यजमानकर्तृकत्वादिति द्रष्टव्यम्। **भावनाक्षिप्तेति**। यद्यपि पचन्ति पाचका इत्यादौ न भावनाक्षिप्तेषु पाचकेषु फलम्, तथापि तत्रोत्सर्गप्राप्तकर्तृगामित्वस्य परस्मैपदबलेन बाधेऽपि न प्रकृत उत्सर्गबाध इति भावः। न केवलमुत्सर्गत एव फलस्य कर्तृगामिता, किं तु 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति स्वरितेतो यज्यादेः कर्तृगामिनि क्रियाफले आत्मनेपदविधानादपीत्याह— **आत्मनेपदेन चेति**। **अनर्थकं स्यादिति**। परिक्रयस्य स्वकीयकार्यकरणार्थत्वेन लोके दृष्टत्वात्सर्वस्यापि स्वेनैवानुष्ठाने तदनर्थकं स्यादित्यर्थः। तर्हि परिक्रयोऽपि स्वस्यैवास्त्वित्याशङ्क्य विप्रतिषेधात्प्रत्यगात्मनीति सूत्रावयवं व्याचष्टे— **स्वस्मिंश्चेति**। आध्वर्यवादिसमाख्याबलादपि त एव कर्तार इत्याशयेनाह— **आध्वर्य-**

९१ **वादीति**। ननु यजमानस्य साङ्गप्रधानकर्तृताबोधके प्रयोगविधौ सति कथं समाख्या प्रभवेदित्याशङ्क्य तस्य स्वतन्त्रप्रयोजकरूपकर्तृद्वयसाधारणत्वान्न समाख्याबाधकत्वमित्याशयेनाह— **तस्मिंश्चेति**। अकर्ता कथं प्रयोक्ता स्यादित्यत्र विपर्ययपर्यवसाने अतः कर्तैव प्रयोक्तेति स्यात्, ततश्चाभेद इत्यतो व्याचष्टे— **कर्तृत्वशक्तिरहित इति**। नन्वेवमपि शास्त्रव्यवहारो नाविद्याधीनः, विदितपदपदार्थसंगतिकस्य न्यायाभिज्ञस्योपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकप्राहिताद्वितीयब्रह्मतात्पर्यकात्तत्त्वमस्यादिवाक्यादुत्पद्यमानस्याशनायाद्यतीतब्रह्मावगमस्यापेक्षाभावमात्रेण वारयितुमशक्यत्वेन व्यवहारस्यैवासंभवे तत्राविद्याधीनत्वस्य दूरोत्सारितत्वात्; किं चैवं कृत्स्नो वेदः प्रमाणं न स्यात्, अविद्याधीनः कर्मव्यवहार इति तदुपघातको च विधेयत्वेनरूपपरस्परव्याहतार्थद्वयप्रतिपादकत्वादिति शङ्कते टीकायाम्— स्यादेतदिति। यथोक्तब्रह्मावगमस्य दुर्लभतया तत्पूर्वभाविनः शास्त्रव्यवहारस्य न कोऽपि विरोध इति प्रथमशङ्कानिराकरणाभिप्रायमाह टीकायाम्— सत्यमिति। द्वितीयशङ्कानिराकरणपरतया न च परस्परेतिटीकामवतारयति-- **ननु ब्रह्मज्ञानेनेति**। टीकायां साध्यांशनिषेधेऽपीति। श्येनादिसाध्यशत्रुवधादिनिषेधेऽपीत्यर्थः। टीकायां कस्य हेतो-

९२ रिति। केन हेतुनेत्यर्थः। पुरुषभेदमेव दर्शयति— अपजितेति। क्रोध एवारातिः शत्रुः

सोऽपजितो यैरित्यर्थः । 'राजा राजसूयेन--' इत्यत्र राजपदस्य क्षत्रियवाचकत्वाद्वर्णाध्यासः । गृहस्थो भविष्यन्सदृशीं भार्यां लभेतेत्यर्थः । कृष्णकेशत्वेन वयोविशेषलक्षणाद्वयोध्यासः । जलादीत्यादिपदेन महागर्तादिकं गृह्यते । प्राणत्याग इत्यादिरित्यादिपदेन महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छतीति व्याधिनिवृत्तिशरीरपतनान्यतरफलकत्वेन विहितं पिण्डपितृयज्ञगतप्रथमतृतीयपिण्डप्राशनादिकं गृह्यते । टीकागतेन पातकशब्देन महापातकमतिपातकं समपातकं चेति त्रयं गृह्यत इत्यभिप्रायेणाह— **पातकं ब्रह्मवधादीति** । महापातकभिन्नं महापातकत्वेनोक्तमतिपातकम् । महापातकसमत्वेनोक्तं समपातकम् । अतिदेशाविशेषेऽपि महापातकप्रायश्चित्तं पादोनमतिपातके, अर्धं समपातक इति भेदः । महापातकादीनि च मनुनोक्तानि 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संयोगं चैव तैः सह' इति । स्तेयं ब्राह्मणस्वर्णहरणम्, गुर्वङ्गना माता, संयोगं संवत्सरकालपरिमितम् । 'हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत् । राजन्यवैश्यावीजानावात्रेयीमेव च स्त्रियम् ॥ उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुं तथा । अपहृत्य च निक्षेपं कृत्वा च स्त्रीसुहृद्वधम्' इति । गर्भस्याविज्ञातत्वं स्त्रीपुंसाविवेकेन बोध्यम् । एतदेव व्रतं महापातकप्रायश्चित्तमेव । ईजानौ यज्ञं कुर्वाणौ, दीक्षिताविति यावत् । आत्रेयीमत्रिगोत्रोद्भवाम् । साक्ष्ये सत्यप्यनृतभाषणम् । गुरोः पित्रादेरुपरोधो बन्दीगृहप्रवेशनम् । स्त्रीशब्देन भार्यादिरुच्यते । 'अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया' इति । उपपातकं गोवधादीति । तथा च मनुः—'गोवधोऽयाज्यसंयाज्यं पारदार्यात्मविक्रयौ । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च' इति । समुत्कर्षे पूज्ये । अलीकनिर्बन्धः अव्याजपीडा । अयाज्या याजयितुमनर्हास्तेषां संयाज्यं याजनम् । पारदार्यं परदारगमनम् । स्वाध्यायस्य वेदस्य अग्नेरौपासनादेर्निर्दुष्टस्य सुतस्य च त्याग इत्यर्थः । आविको मेषः । यद्यपि संकलीकरणानन्तरपापं मलिनीकरणं तदनन्तरपापमपात्रीकरणमनेनैव क्रमेण प्रायश्चित्ततारतम्यस्मृतेः, तथापि क्रमानादरेण टीकायामुक्तिरिति स्वयमपि तथैवोदाहरति— **निन्दितेभ्य इति** । वाणिज्यं वृद्धिजीवनम् । असभ्यः सभायामसाधुः, सभानर्ह इति ९३ यावत् । क्रिमयो व्रणाद्युत्पन्ना जन्तवः । कीटा वृश्चिकादयः । वयांसि पक्षिणः । मद्यं मदकरं वस्तु नारिकेलासवादि । तत्संपृक्तभोजनमित्यर्थः । अधैर्यमवश्यकर्तव्येष्वित्यर्थः । मलावहमिति । मलं पापम्, तत्संपादकमित्यर्थः । मलिनीकरणमिति यावत् । ब्राह्मणस्येति । तदीयस्य मनसो देहस्य वा रुजः पीडायाः करणमित्यर्थः । अघ्रेयं तालफलादि । जैह्म्यं कौटिल्याचरणम् । जातिभ्रंशकरादीत्यादिपदेन प्रकीर्णकं गृह्यते । तत्र प्रागुदाहृताष्टविधभिन्नं पापं ताडनादि । अभ्यर्हितत्वादिति उपजीव्यत्वादभ्यर्हितत्वम् । नन्वात्मनि पुत्रादिस्वामित्वस्य साक्षादेवाध्याससंभवे मध्ये किमर्थं देहतादात्म्याध्यासवर्णनमित्यत आह— **गृहीतविवेकत्वादिति** । **देहगतस्वामित्वस्येति** । यद्यपि पुत्रादिस्वामित्वं पुत्राद्यधीनभोगभाक्त्वं न देहे संभवति, तथापि तदधीनपोषणादिभाक्त्वमिह स्वामित्वं विवक्षितमिति न दोषः । टीकायां स्वस्य साकल्येति । स्वभूतस्य पुत्रादेः साकल्येन तन्निरूपितस्य स्वाम्यस्य साकल्यादित्यर्थः । **कथं बाह्यग्रहणमिति** । देहगतस्वामित्वधर्म-

त्वेन बाह्यधर्मत्वाभावादिति भावः। बाह्यपुत्रादिधर्माणामेव शरीरे आत्मनि चारोपान्न दोष ९४ इति परिहरति— **तत्राहेति**। पुत्रादिगतानामपि साकल्यवैकल्यादीनां स्वाम्यद्वारा शरीरे संचारितानां शरीरधर्माणामेव सतामात्मन्यारोपस्य पूर्वमुक्तत्वात्तथा देहधर्मानिति भाष्यायोगमाशङ्क्याह टीकायाम्— यदा चेति। अत्यन्तविविक्तपुत्राद्यपेक्षे स्वाम्ये तद्गतेषु साकल्यादिषु च यदेयं गतिः पूर्वपूर्वाध्यासवशादात्मन्यध्याससंभवः तदा निरुपाधिकेषु कृशत्वादिष्वात्मन्यध्याससंभवे का चिन्तेत्यर्थः। कर्मेन्द्रियधर्माणां मूकत्वादीनां ज्ञानेन्द्रियधर्माणां काणत्वादीनामन्तःकरणधर्माणां कामसंकल्पादीनामप्यध्यासो धर्म्यध्यासपूर्वक एवेति दर्शयन्नध्यस्यतीति पदानुपङ्गेण भाष्यं योजयति टीकायाम्— देहादपीति। अहंप्रत्ययिनमिति पदे इतिप्रत्ययस्यार्थमाह टीकायाम्— यस्मिन्नन्तःकरणादाविति। इन्द्रियदेहावादिशब्देन गृह्येते। अन्तःकरणस्य प्रचारेति टीकायामप्यन्तःकरणादिव्यापारसाक्षिणीति द्रष्टव्यम्। **साक्षिशब्दार्थमिति**। 'साक्षाद्द्रष्टरि संज्ञायाम्' इति सूत्रेण व्यवहारफलासंस्पर्शिन्युदासीने तद्द्रष्टरि इनिप्रत्यये टिलोपे च साक्षिशब्दनिष्पत्तेरिति भावः। आत्मन्यन्तःकरणाध्यासस्य ९५ कर्तृत्वभोक्तृत्वोपपादकत्वमुक्तं तदनेनेति टीकायाम्; तद्विशदयति— **सक्रियोपाधेरिति**। **भ्रममपनयतीति**। पूर्वपूर्वाध्यासावगते अवच्छिन्नरूप एव साक्षिण्यन्तःकरणादीनामध्यासो न शुद्धे, तस्यारोपाधिष्ठानायोग्यत्वादिति भावः। भाष्ये विषयप्रयोजनयोः पूर्वं निर्देशात्कथं प्रकृतमिति टीकेत्यत आह— **उपोद्घातेति**। विद्याशब्देन साक्षात्कारस्य निर्दिष्टत्वात्प्रतिपत्तिशब्दो निरर्थक इत्यत आह टीकायाम्— प्रतिपत्तिः प्राप्तिरिति। टीकायां नापि कर्मसु प्रवृत्तय इति। कर्तृस्तावकत्वेनेति शेषः। टीकायामात्मैकत्वनिर्वचनमहंप्रत्ययागम्यत्वाय। नन्वात्मैकत्वसाक्षात्काराय वेदान्ता आरभ्यन्ते इत्ययुक्तम्, साक्षात्कारस्य शब्दाजन्यत्वात् इत्यत आह टीकायाम्— आनन्दरूपस्येति। तथा च निर्विचिकित्सपरोक्षनिश्चयजननद्वारा साक्षात्कारजनकान्तःकरणसहकारितया वेदान्तानामध्यासनिवृत्त्युपयोगित्वमुपपन्नमिति भावः। प्रहाणायेति भाष्यस्थप्रशब्दार्थकथनं समूलघातमिति। मूलाविद्यासहितमध्यासमुपघ्नन्तीति तदर्थः। एतदुक्तमित्यादिटीकायामजिज्ञास्यत्वनिरसनमनवसरदुःस्थमित्याशङ्क्याह— **एवमिति**। **प्रसिद्धत्वादिति**। एतच्चोपलक्षणम्; निष्प्रयोजनत्वादित्यपि द्रष्टव्यम्। आरम्भस्य प्रागनिष्पन्ननिष्पादनरूपत्वान्नित्यसिद्धेषु वेदान्तेषु तदसंभवमाशङ्क्य व्याचष्टे इत्याशयेनाह— **पठ्येरन्निति**। एतदुक्तमिति टीकाया अयमर्थः— अहमित्यात्मप्रत्ययस्य समीचीनत्वे तदभिन्नस्य ब्रह्मणोऽपि ज्ञातत्वेन प्रत्यक्षविरुद्धैश्च वेदान्तैरन्यपरैरशनायाद्यतीतस्य ब्रह्मणोऽनवगमादहं कर्तेत्यादिप्रत्ययस्य च समीचीनत्वे संसारस्य सत्यतया निवर्त्यत्वायोगेन विषयप्रयोजनाभावान्न ब्रह्मजिज्ञासा स्यात्। तदभावे च वेदान्तज्ञाप्यस्य कस्यचिदज्ञातस्याभावान्न वेदान्ताध्ययनं ब्रह्मज्ञानफलकं भवेत्। किं त्वविवक्षितार्थजपादावुपयुज्येरन्; न त्वेतदस्तीत्यर्थः। तत्र हेतुः न हीति। तदा अविवक्षितार्थत्वे। तथा चोपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकप्राहिताद्वितीयब्रह्मतात्पर्यकानन्यथासिद्धस्वतःप्रमाणवेदान्तवाक्यजनितस्य सर्वसंसारनिवर्तकस्य ब्रह्मात्मप्रत्ययस्य प्रामाण्यान्यथानुपपत्त्या अहंप्रत्ययस्य मिथ्यात्वमास्थेयम्। ततश्च तद्विषयस्य संपिण्डितात्मस्वरूपस्य संसारस्य च मिथ्यात्वसि-

द्धिः। अप्रमाणज्ञानस्य सत्यनिवर्तकत्वादर्शनादिति भावः। केवलस्य तदनिवर्तकत्वेऽप्यभ्यस्तस्य तन्निवर्तकत्वमस्त्विति तटस्थशङ्कायामाह— **न चासाविति** । अदर्शनादेवेति परिहरति— आरोपितं हंति । सर्पधाराप्रलया इति । सर्पप्रलया धाराप्रलया वेत्यर्थः । अनादेः संसारस्य कथमादिना तत्त्वज्ञानेन निवृत्तिरविरोधादिति यदुक्तमाक्षेपावसरे तन्निरस्यति— मिथ्याज्ञानसंस्कारश्चेति । आदरः श्रद्धादिसाचिव्यम् । नैरन्तर्यमनुस्यूतता । तथा च प्रबलसहकारिसमवहितनिदिध्यासनजन्येनागन्तुकेनैव साक्षात्कारेण तन्निवृत्तिरिति भावः । जन्मनेति । शक्योऽपवदितुमित्यनुपङ्गः । टीकायां प्राणादीत्यादिपदेनोद्गीथादीनां ग्रहणम् । उपासनानां चित्तैकाग्र्यद्वारा आत्मैकत्वसाक्षात्कारार्थत्वात्तद्वाक्यानामपि महातात्पर्यमैक्य एवेति न दोष इति परिहरति टीकायाम्— अत आहेति । प्रपञ्चितस्यार्थस्य संक्षेपेण कथनं व्यर्थमित्यत आह— **अधिकरणमिति** । संशयतद्बीजसंगती स्वयं दर्शयति— ९६ **वेदान्तशास्त्रमिति** । श्रुत्यर्थविचारात्मकत्वाभावादस्याधिकरणस्य कथं श्रुतिसंगतिरित्याशङ्क्य श्रुत्याक्षिप्तत्वाच्छ्रुतिसंगतिरित्याह— **वेदान्तैरिति** । एवमपि शास्त्रप्रतिपाद्यसमन्वयाविरोधसाधनफलान्यतमप्रतिपादकत्वाभावात्कथं शास्त्रसंगतिरित्याशङ्क्य शास्त्रार्थविचारोपोद्घातत्वाच्छास्त्रादिसंगतय इत्याह— समन्वयादीति । संशयादिकथनेनैव वेदान्तानां विषयत्वं सुज्ञानमिति न पृथगुक्तम् । आशङ्कापनयपूर्वकमिति । सिद्धान्तिशङ्कापनयपूर्वकमित्यर्थः । पूर्वपक्ष्यभिमतार्थनिरासपूर्विकां सिद्धान्तिशङ्कां दर्शयति— अविवक्षितार्थत्वमिति । किं वेदान्तानामर्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वम् उत सिद्धपरत्वासंभवात् अथ वा प्रमानुत्पादकत्वात्? तत्राद्यं यद्यपीत्यादिटीकाभिप्रायकथनेन निराकरोति— अध्ययनेति । **तुल्यत्वादिति** । विधिनिषेधभागयोरिव वेदान्तभागेऽपि तुल्यत्वादित्यर्थः । द्वितीयमाशङ्क्य यद्यपि चाविशिष्ट इति टीकाव्याख्यया परिहरति— **न च कार्येति**। **सिद्धरूप इति** । तथा च टीकायामर्थपरत्वं सिद्धार्थपरत्वं बोध्यम् । तृतीयं यद्यपि चेति टीकाव्याख्यया निराकरोति— नापीति । परिहरतीति । सिद्धान्तिशङ्कां परिहरति पूर्वपक्षीत्यर्थः । न च सर्वजनीनेति टीकां युक्त्यन्तरपरत्वेन व्याचष्टे प्रमाणेति । टीकायाम्— तस्य तूक्तेन क्रमेणेति । तथापीत्यादिभाष्यभाववर्णनावसरे इदमत्राकूतमित्यादिटीकोक्तेन प्रकारेणाहंप्रत्ययस्य प्रामाण्याभावेन श्रुतिस्मृतीतिहासपुराणबाधकत्वानुपपत्तेरित्यर्थः । हेत्वन्तरमाह टीकायाम्— श्रुत्यादिभिश्चेति । अहंप्रत्ययसिद्धं जीवस्वरूपमनूद्य तस्य कर्तृत्वभोक्तृत्वादिरहितब्रह्मभावबोधनपरैः साक्षादेव कर्तृत्वादिनिषेधपरैश्च 'तत्त्वमसि' 'न कर्ता नाकर्ता' 'क्षेत्रज्ञं चापि मां विद्धि' 'अहंकारविमूढात्मा कर्ताहमिति मन्यते' 'अहमेवाव्ययो नित्यः परमात्मात्मसंश्रयः' 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' इत्यादिभिः श्रुतिस्मृतीतिहासपुराणैस्तत्तात्पर्याभिज्ञैः समस्तैः शास्त्रकारैश्च प्रामाण्यानभ्युपगमादध्यासत्वमित्यर्थः । टीकायां किं तूक्तलक्षण इति । चैतन्यानन्दघन इत्यादिटीकोक्तः प्रत्यगात्मैव वेदान्तानां मुख्योऽर्थस्तात्पर्येण प्रतिपादनादिति भावः ॥

**अथातो ब्रह्मजिज्ञासा** । ननु स्वरूपज्ञानमिदानीमपि विद्यमानत्वान्न प्रयोजनम्; ९७ इतिज्ञानं त्वनानन्दरूपतया न पुरुषार्थः; तथा च कथं ब्रह्मज्ञानं प्रयोजनमिति टीकेत्यत

आह— **वृत्तिव्यक्तमिति** । अनेन साक्षादव्यवधानेनेच्छाव्याप्यत्वाद्ब्रह्मरूपं यज्ज्ञानं वृत्तिव्यक्तं स्वरूपं कण्ठोक्तं सूत्रगतब्रह्मपदजिज्ञासापदप्रकृतिभ्यामुक्तम्, तदेव साक्षात्प्रयोजनं परमप्रयोजनमित्येवं टीका व्याख्याता । कर्मज्ञानवद्ब्रह्मज्ञानमपि न साक्षात्प्रयोजनमित्याशङ्कां निराकरोति टीकायाम्— न चेत्यादिना । पूजितविचारवचनेन मीमांसाशब्देन

९८ न्यायकलाप एवोच्यत इत्याशयेनाह— **सा न्यायात्मिकेति** । **प्रतिज्ञानादिति** । ब्रह्मज्ञानेच्छोपदेशे अर्थाद्विषयादीनां प्रतिज्ञानादिति भावः । स्वल्पाक्षरपदानीति पृथगुपादानाल्लघुत्वमन्यथा दर्शयति— **लघूनीति** । मुख्यार्थद्वारकसूचितार्थबाहुल्येन स्वोक्ते सूत्राणां बह्वर्थत्वे कथमयं श्लोकः संमतित्वेन लिखित इत्यत आह— **सूचितार्थत्वेनेति** । बहूनामप्रस्तुतत्वादिति । आदिमं सूत्रमिति । सूत्रस्यैकस्यैव प्रस्तुतत्वादिति भावः । अथशब्दस्तेष्वानन्तर्यार्थ इत्यन्वये तेषु सूत्रपदविषये यदानन्तर्यं तदर्थ इति सूत्रानन्तर्यार्थशब्दार्थ इति स्यात्; तद्व्युदासायाह टीकायाम्— तेषु सूत्रपदेषु मध्य इति । विधास्यमानेति । 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः' इत्येतदनन्तरपठितेन 'एतेन सहस्रदक्षिणेन यजेत' इति वाक्येन विधास्यमानेत्यर्थः । अधिकारार्थत्वं वदन्प्रष्टव्यः किं जिज्ञासाप्रारम्भार्थकत्वमुत ब्रह्मतज्ज्ञानप्रारम्भार्थकत्वम्? नाद्यः, ज्योतिरादिसंज्ञकानां कर्मणामिव शब्दानुशासनयोगानुशासनपरसूत्रसंदर्भयोरिव च जिज्ञासाया उत्तरत्राकथनादित्युक्तं टीकायाम् । द्वितीयं शङ्कते— प्रधानस्येति । **ब्रह्मतज्ज्ञानेति** । चतुर्णामप्यध्यायानां सपरिकरब्रह्मज्ञानप्रतिपादनमुखेन प्राप्तव्यब्रह्मस्वरूपप्रतिपादनपरत्वादिति भावः । किमिच्छाया अविवक्षितत्वेन ब्रह्मतज्ज्ञानयोरेव प्रधानयोरथशब्देन संबन्ध उत तद्विशेषणीभूतयोः? नाद्यः, इच्छाया अवश्यविवक्षणीयत्वादित्युक्तं टीकायाम्— ब्रह्मजिज्ञासेत्यादिना । तत्र दृष्टान्तवैषम्यं

९९ दर्शयति— **दण्डीति** । प्रैषानुवचने प्रैषे अनुवचने चेत्यर्थः । सूत्रे निर्देशमात्रेणैव ब्रह्मतज्ज्ञानयोर्विषयप्रयोजनत्वसिद्धिरिति वदन्प्रष्टव्यः किं बाधकाभावेन वेदान्तानां ब्रह्मप्रतिपादनपरत्वात्तत्सिद्धिः वेदान्तानामर्थपरत्वप्रतिपादनपरस्वाध्यायाध्ययनविधिबलाद्वा? नाद्यः, प्रबलाहंप्रत्ययविरोधेन वेदान्तानां ब्रह्मात्मैक्यपरत्वासिद्धेः; नान्त्यः, अर्थपरत्वाभावेऽप्यध्ययनवि-

१०० धिपरिग्रहसंभवादिति परिहरति— **तत्राहेति** । तस्मात्प्राधान्येन ब्रह्मनिर्णयेच्छासूत्रेण एव प्रागुक्तरीत्या अहंप्रत्ययस्य दौर्बल्यहेतुन्यायसूचने प्रबलविरोधाभावेन वेदान्तसंभावितस्य ब्रह्मणः प्रागनिर्णीततया संदिग्धत्वेन विषयत्वसिद्धिः तन्निर्णयस्य फलत्वसिद्धिश्च नान्यथा; अतः सैव सूत्रे प्रधानमित्याह टीकायाम्— तस्मादिति । ब्रह्मज्ञानेच्छाया उत्तरसूत्रेष्वनुवर्तमानत्वादप्रस्तूयमानत्वमसिद्धमित्यत आह— **प्रत्यधिकरणमिति** । इच्छाविशेषणीभूतयोरेवाथशब्देन संबन्ध इति द्वितीयं निराकरोति टीकायाम्— जिज्ञासाविशेषणं त्विति । जिज्ञासाशब्दनिर्दिष्टेच्छाविशेषणं ब्रह्मज्ञानम् । इदमुपलक्षणम्, ब्रह्म चेत्यपि द्रष्टव्यम् । जिज्ञासाया मीमांसात्वात्तस्याश्च न्यायरूपाया उत्तरत्र प्रतिपादनाद्युक्तमधिकारार्थत्वमित्याशङ्क्य किं जिज्ञासापदस्य मुख्योऽर्थो मीमांसा उत लाक्षणिकः? नाद्यः, जिज्ञासामीमांसापदयोर्भिन्नार्थकत्वादित्युक्तं टीकायाम् । तत्र व्याकरणसूत्रार्थं विशदयितुमाह— **मान्बधेत्यादिना** । माङो ङकारस्थाने तदुपरि वा नकारे मीमांसत इत्यात्मनेपदं न

सिद्ध्येदित्यत आह— **सानुबन्धस्य धातोरिति** । प्रसिद्धिबलादिति । लोकप्रसिद्धिबलादित्यर्थः । **स्मृतिसिद्धमिति** । 'मान पूजायाम्' इति धातुपाठात् 'मानेर्जिज्ञासायाम्' इति विचारार्थे वर्तमानादेव सन्विधानाच्च सिद्धमित्यर्थः । इदानीं सूत्रपदानि योजयति— **मानित्यादीति** । विचारादिष्वर्थेषु वर्तमानेभ्य इत्यर्थः । इतोऽपि जिज्ञासामीमांसयोर्भेद इत्याह टीकायाम्— **प्रवर्तिका हीति** । द्वितीयं शङ्कते— **लक्षितेति** । किमन्वयानुप- १०१
पत्त्या लक्षणा, विचारे प्रवृत्तिसिद्ध्यर्थं तत्परत्वावश्यंभावेन तात्पर्यानुपपत्त्या वा? नाद्य इत्याह — **नेत्याहेति** । द्वितीयं निराकरोति— **अधिगतेति** । प्रवर्त्स्यतीति । प्रवर्तिष्यत इत्यर्थः । टीकायाम्— मङ्गलप्रयोजनो भवतीति । तथा च तत्प्रयोजनकत्वमात्रेण तादर्थ्यमौपचारिकमादाय 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इति निघण्टुप्रवृत्तिरिति न तद्विरोध इति भावः । टीकायाम्— पूर्वप्रकृतापेक्षोऽथशब्द इति । ततश्च पूर्वप्रकृतादर्थान्तरं ब्रह्मजिज्ञासेति सूत्रार्थ इति भावः । टीकायाम्— अथाधिकारे इति । आनन्तर्ये १०२
वर्तमानादथशब्दादन्य एव किमधिकारार्थे वर्तत इत्यर्थः । एतदेवाह टीकायाम्— अत्र विमर्शकवाक्य इत्यादिना । **किं पूर्वप्रकृतादिति** । किमयमथशब्द आनन्तर्य इति प्रथमविकल्पोपन्यासपरे पूर्ववाक्ये विकल्पधर्मित्वेन प्रकृतादथशब्दादानन्तर्यमुतान्यवहितात्तद्विकल्पादित्यर्थः । किं पूर्वप्रकृतमथशब्दमप्यपेक्ष्य ब्रूयादुतानपेक्ष्येति योजना । असमानविषयत्वे विकल्पानुपपत्तिं प्रकटयति— **एकधर्मीति** । **आनन्तर्यरूपत्वपक्षे विकल्पाप्रतिभानादिति** । यत्र विकल्पप्रतिभानं तत्रैव पूर्वविकल्पधर्म्यपेक्षयार्थान्तरे अथशब्दस्य प्रसिद्धेरिति भावः । पूर्वप्रकृतस्य सिद्धिर्निश्चयः । भवन्ती भवत्येवेति पौनरुक्त्यं परिहरन्व्याचष्टे— **अन्यदपीति** । १०३
योग्यत्वादित्यस्य स्वाध्यायाध्ययनानन्तर्यमित्यस्य चापेक्षितं पूरयन्व्याचष्टे— **स्वाध्यायेति** । प्रतीकमनुपादायापि व्याख्यानं व्याख्यानेनैव व्याख्येयग्रन्थस्य ज्ञातुं शक्यत्वेन लाघवार्थमिति ध्येयम् । धर्मवदित्यस्य वाक्यादित्वेऽपि तस्य दृष्टान्तत्वात्तत्परित्यज्य ब्रह्मणोऽपीति प्रतीको गृहीतः । लक्षणायां बीजं दर्शयन्नत्र चेत्यादिटीकां व्याचष्टे— **स्वा-** १०४
**ध्यायस्येति** । **ब्रह्मानुपादानादिति** । प्रमाणस्वरूपसाधनफलैः साभासैर्धर्मस्यैव तत्र जिज्ञास्यत्वकथनादिति भावः । धर्मजिज्ञासासूत्रे धर्मग्रहणं वेदार्थमात्रोपलक्षणम् अन्यथा निषेधवाक्यार्थविचारासंग्रहापत्तेः; ततश्च तस्मिन्नेव सूत्रे वेदार्थविचारमात्रस्य वेदाध्ययनानन्तर्ये बोधिते कर्मविरोधितया जैमिनिपरित्यक्तब्रह्मविचारमात्रप्रवृत्तेनापि बादरायणेन तद्गुणत्वादितशेषशेषिभावादिन्यायानामिव प्रथमसूत्रबोधितवेदाध्ययनानन्तर्यस्याप्युपजीवनसंभवेन पुनस्तत्सूत्रणं व्यर्थमेव; अत एव 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनादत्र तद्व्यवस्थापनं पुनरुक्तमिति शङ्कामुद्भाव्य शबरस्वामिना तत्र तत्कृतं न सूत्रारूढमिति समाधानं भाष्यकृता करिष्यत इत्याशयेन परिहरति— **अत आहेति** । ननु कथं यज्ञादीनां ब्रह्मज्ञाने विनियोगः इच्छायाः प्रत्ययार्थत्वेन प्रधानत्वात्; न च प्रत्ययार्थः प्रधानमिति सामान्यन्यायादिच्छेभ्यमाणसमभिव्याहृताविध्यमाणं प्रधानमिति स्वर्गकामपदादिषु कल्पतो विशेषन्यायो बलवानिति वाच्यम्, तस्य प्रत्ययाभिन्नकर्मपदादिविषयतया सावकाशत्वेन विशेषन्यायत्वासिद्धेरित्यभिप्रेत्य शङ्कते— **नन्विति** ।

१०८ इष्टस्य सर्वापेक्षया प्रधानत्वेन तच्छेषत्वमेव युक्तमिति परिहरति— **तत्राहेति। साक्षात्कारोपयोगमिति।** ततश्च श्रवणादिकालेऽपि साक्षात्कारार्थमनुष्ठेयानि कर्माणीति तदवबोधस्यावदियकतया तदानन्तर्यमेवाथशब्दार्थ इति भावः। टीकायां निर्विचिकित्सवाक्यार्थज्ञानजनने वाक्यस्य कर्मापेक्षेत्याशङ्क्य किं वैदिकवाक्यार्थज्ञाने सर्वत्र तदपेक्षा उत, वेदान्तवाक्यार्थज्ञानमात्रे? नाद्यः, शक्तिग्रहे शाब्दबोधहेतुन्यायपरिज्ञाने आकाङ्क्षाद्यनुसंधाने च सति कर्मानुष्ठानेन विना निर्विचिकित्सवाक्यार्थज्ञानोत्पत्तौ विलम्बादर्शनादित्याह— अकृतकर्मणामित्यादिना। विपक्षे दण्डमप्याह टीकायाम्— अनुत्पत्तौ वेति। द्वितीयमाशङ्क्य निराकरोति टीकायाम्— न च वेदान्तेति। **असिद्ध इत्याहेति।** प्रत्यक्षादिप्रमाणसिद्धकर्तृभोक्तृरूपस्य जीवस्य तद्रूपप्रहाणेन तद्विलक्षणब्रह्मभावबोधकत्वस्य विशेषहेतोः सत्त्वात्तदभावोऽसिद्ध इति शङ्कावाद्याहेत्यर्थः। झटिति प्रतिपत्तुमशक्यत्वे हेतुमाह टीका-
१०९ याम्— आपातत इति। अशुद्धसत्त्वैरापाततो योग्यताविरहनिश्चयादित्यन्वयः। टीकायाम्— यज्ञदानेति। यज्ञेन दानेन अनाशकेन शरीराशोषकेण तपसा च निराकृतान्तर्मला अत एव विशुद्धसत्त्वा इत्यर्थः, 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेरिति भावः। योग्यतावधारणे किं करणतया कर्मणामुपयोग उत सहकारितयेति विकल्प्य प्रथमं निराकर्तुं तत्किमित्यादिटीका। तां विकल्पमुखेन योजयति— योग्यतेत्यादिना। योग्यतावधारणप्रतिबन्धककल्मषनिबर्हणद्वारा कर्मणां सहकारित्वमिति द्वितीयं कल्पं निराकरोति टीकायाम्— वेदान्ताविरुद्धेति। ततश्च परिशेषात्साक्षात्कार एव कर्मणामुपयोग इत्युपसंहरति टीकायाम्— तस्मादिति। श्रुतिमयेन श्रुतिजन्येन। टीकायाम्— तर्कोपकरणेन शब्देन विज्ञायेत्यन्वयः। अस्यां श्रुतौ 'धीरः' इत्यनेन फलाभिसंधिमन्तरेणानुष्ठितयज्ञादिनिर्मलीकृतान्तःकरणत्वलक्षणं धैर्यं प्रज्ञाहेतुत्वेनोक्तमिति कर्मणामुपयोग उक्त इति द्रष्टव्यम्। टीकायाम्— श्रेयःपरिपन्थीति। ब्रह्मात्मैक्यसाक्षात्कारपरिपन्थीत्यर्थः। टीकायाम्— पुरुषसंस्कारेति। साक्षात्कारजननयोग्यताधानलक्षणसंस्कारेत्यर्थः। ब्रह्मभावनामासेवमान इत्यन्वयः। महायज्ञैः ब्रह्मयज्ञादिभिः पञ्चभिः इतरैर्ज्योतिष्टोमादियज्ञैश्च जीवस्य ब्रह्मभावस्फूर्तियोग्या तनुः क्रियत इत्यर्थः। सप्त पाकयज्ञाः सप्त हविर्यज्ञाः, सप्त सोमसंस्थाः, निषेकादिश्मशानान्तानि षोडश कर्माणि, चत्वारि व्रतानि, इति चत्वारिंशत्संस्काराः। ऋणत्रयं देवर्षिपितृ-
११० संबन्धि ऋणत्रयम्। **संस्कारद्वारेति।** ऋणत्रयापाकरणकल्मषनिबर्हणयोरपि संस्कारत्वेन त्रयाणामपि पक्षाणां भावाभावसंस्कारद्वारा कर्मोपयोगप्रतिपादकत्वादिति भावः। संयोगपृथक्त्वेनेति संयोगशब्दार्थमाह— **संयोग इति। किं काम्यैवेति।** काम्यैव सती खादिरता नित्येऽपि किं स्यात्, नित्यार्थापि स्यात्, उत न नित्यार्था किं तु काम्यैवेति संशय इत्यर्थः। **न युक्तेति।** नित्यानित्यसंयोगविरोधादिति भावः। क्रत्वङ्गताबोधकप्रमाणसत्त्वान्न विरोध इति शङ्कते— **यद्विवति।** वचनमन्यार्थमिति परिहरति— **तदिति।** नित्येऽपि प्रयोगे खादिरत्वस्य श्रवणमस्तीति यत्त्वयेष्यते तत्काम्यस्यैव खादिरत्वस्य यूपरूपाश्रयदानार्थमित्यर्थः। सिद्धस्य यूपस्य कथं खादिरत्वाश्रयत्वम्? तदसाध्यस्य तद्वारत्वायोगादित्याशङ्क्य क्रियाविशेषेण साध्यतां दर्शयितुं पशुबन्धयुक्तेत्युक्तम्। एकस्योभयशेषत्वे संयोगपृथक्त्वं कारणमिति

सूत्रयोजनामभिप्रेत्य फलितमर्थं दर्शयन्द्वयोरपि प्रमाणयोः परस्परनैरपेक्ष्येणोभयार्थत्वबोधकत्वान्न नित्यानित्यसंयोगविरोध इत्याशयेन सिद्धान्तमाह— **एकस्य खादिरत्वस्ये-** १११ **त्यादिना । संनिधानादेवेति ।** 'दध्नेन्द्रियकामस्य' इत्यादाविन्द्रियाद्यर्थतया विधीयमानस्य दध्यादेरिव संनिधानादेवाश्रयलाभान्न तदर्थं वाक्यान्तरापेक्षेति भावः । सूत्रगतसर्वशब्दार्थं दर्शयन्सर्वापेक्षेति पदं योजयति टीकायाम्— **यज्ञेति ।** विशेषणत्रयशब्देनादरनैरन्तर्यदीर्घकालैर्नात टीकोक्तं गृह्यत इत्याह— **आदरेति ।** टीकायाम्— अविद्यातद्वासनयोः समुच्छेदः शिथिलीकरणम् । अभिव्यक्तस्वरूपस्यैव मोक्षत्वान्मोक्षापरनाम्नि साक्षात्कारायेत्युक्तम् । **शेषलक्षणादारभ्येति ।** शेषलक्षणं तृतीयाध्यायः; तत आरभ्य चतुर्भि- ११२ रध्यायैः शेषत्वप्रयुक्तिक्रमाधिकारनिरूपणार्थैरुपदेशविचारः; सप्तमाद्यैश्चतुर्भिः सामान्यातिदेशविशेषातिदेशोहबाधनिरूपणार्थैरतिदेशविचारः; एकादशद्वादशाभ्यामुपदेशातिदेशसाधारणतन्त्रप्रसङ्गविचार इति विवेकः । साहित्यनेन कथं चातुर्थिकन्यायसंग्रह इत्याशङ्क्य प्रयोज्यप्रयोजकसंबन्धरूपस्य साहित्यस्य किं केन प्रयुज्यते अनुग्राप्यत इति प्रयुक्तिविचाराधीनत्वात्तेन तद्धेतुसंग्रह इत्याशयेनाह— **प्रयोज्येति । संस्कारकर्मत्येति ।** यद्यपि संस्कारकर्मणोऽपि स्रुक्संमार्गादेर्गुणकर्मत्वमस्ति, तथापि दृष्टप्रयोजनाभावेन प्रसिद्धगुणकर्मवैषम्यात्पृथग्ग्रहणम् । ननु 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्यबलात्कृत्स्नस्यापि पुरोडाशस्य यागीयत्वावगमात्कथं अवदानमात्रापेक्षा टीकायामुक्ता, 'चतुरवत्तं जुहोति' इति वाक्यस्य त्यक्तपुरोडाशैकदेशप्रतिपत्तिप्रक्षेपमात्रविधिपरत्वादित्याशङ्क्य वार्तिककारमते तथात्वेऽपि भाष्यकारमते 'यदाग्नेयः' इत्यादिवाक्यावगतं पुरोडाशस्य यागसाधनत्वं अवदानद्वारैव चतुरवत्तवाक्येन 'द्विर्हविषोऽवद्यति' इति वाक्यविहितावदानमात्रस्यैव यागसाधनत्वेन विधानात्; ततश्च तन्मतानुरोधेन टीकेत्याशयेनाह— **आग्नेयेति ।** टीकायां विकल्पासहत्वादित्यनन्तर- ११३ मुत्कटानुत्कटकोटिकतया विकल्पमप्रदर्श्यैव क्रमेण कल्पद्वयं निराकृतम् । स्वयं तं विकल्पं विशदयन्नाह— **भावनासाध्य इति ।** संयवनशब्दार्थमाह— **मिश्रणस्येति ।** टीकायाम्— प्रोक्षणस्योलूखलादय इति । 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति वचनादिति भावः । **प्राप्यं पय इति ।** 'गां दोग्धि पयः' इत्यादौ गां रिक्तीकरोति पयः प्राप्तुमिति वाक्यार्थः । अत एव 'दुह प्रपूरणे' इत्यत्र प्रपूरणं रिक्तीकरणम्, प्रस्मर्तव्यमित्यादाविव प्रशब्दस्य नञर्थकत्वादिति भावः । टीकायामिन्द्रियाद्याधेय इत्यस्य पूर्वेणान्वयः । **जडं स्यादिति ।** दृगिभन्नस्य दृश्यध्यस्तत्वेनैव प्रकाशावश्यंभावादध्यस्तस्य च जडत्वनियमादिति भावः । ननु ततो भिन्नस्येत्यादिटीकायां प्रामाण्यायोगादित्युक्तमयुक्तम्, इन्द्रियशब्दादिप्रमाणजन्यत्वेन तदुपपत्तेरित्यतस्तदभिप्रायमाह— **तथेति ।** 'न चक्षुषा गृह्यते नापि वाचा' 'यन्मनसा न मनुते' इति च श्रुतेरिति भावः । टीकायाम्— उपासनाया उत्पाद्यादिः मा भूदित्यन्वयः । टीकायां रङ्गव्यापृतेन संस्कार्या नर्तकीत्युक्तम् । तत्र रङ्गव्यापृतशब्दार्थमाह— **नट इति ।** शाब्दज्ञानमात्रेति मात्रशब्देन निश्चयत्वा- ११४ नधिकरणत्वं विवक्षितमिति दर्शयन्नाह— **उपासना किमिति ।** साक्षात्कारस्यो हीत्यादिटीकाया जीवे कर्तृत्वाद्यध्यासस्तद्विरुद्धाकर्तृभोक्तृब्रह्मात्मत्वसाक्षात्कारनिवर्त्यः साक्षात्कारविपर्या-

सत्त्वादित्यनुमानं सूचितम्। तस्य व्यभिचारं शङ्कते— **नन्विति**। हेतौ सोपाधिकत्वं विशेषणम्, तथा च निरुपाधिकेषु रज्जुसर्पादिभ्रमेषु न व्यभिचारः, अन्तःकरणोपाधिकेषु कर्तृत्वाद्यध्या-
११५ सेषु च नासिद्धिरिति परिहरति— **सत्यमिति**। **तथाविधमिति**। दिङ्मोहादावप्यपरिशीलितप्रदेशविशेषप्राप्त्यादिरुपाधिरिति भावः। शब्दस्य साक्षात्कारजनकत्वे हेतुं सूचयितुमपरोक्षे ब्रह्मणीत्युक्तम्। तस्यायमभिप्रायः— ज्ञानस्यापरोक्षत्वमपरोक्षार्थव्यवहारानुकूलज्ञानत्वम्। अर्थस्य त्वभिव्यक्तचैतन्याभिन्नत्वम्, तच्च क्वचित्स्वाभाविकं क्वचिदाध्यासिकम्, न त्विन्द्रियत्वेनेन्द्रियजन्यत्वादिकं ज्ञानापरोक्ष्यम् अपरोक्षज्ञानविषयत्वं चार्थापरोक्ष्यमिति युक्तम्, साक्षिण्यव्याप्तेः सोऽयं देवदत्त इति तत्तांशातिव्याप्तेर्गौरवाच्च। ततश्च शब्दजन्यमप्यपरोक्षब्रह्मज्ञानम् अपरोक्षमिति। शब्द एवेति। 'तं त्वौपनिषदम्' इति श्रुतेरिति भावः। **भ्रमत्वापातादिति**। वेदान्तवाक्यजन्यस्य च ज्ञानस्य भ्रमत्वमयुक्तमिति भावः। टीकायां तस्यैव तत्फलत्वनियमादित्यादिना प्रमाणविशेषजन्यत्वादेव ज्ञानस्यापरोक्ष्यम,
११६ तद्विषयत्वं चार्थस्य, शब्दश्च प्रत्यक्षप्रमायामयोग्य इत्युक्तम्; तदभिप्रायमाह— **अयमभिसंधिरिति**। किमभिव्यक्तचैतन्याभिन्नत्वमात्रमर्थस्यापरोक्ष्यम्, उत तदपरोक्षव्यवहारानुकूलाभिव्यक्तिमच्चैतन्याभिन्नत्वम्? नाद्यः, यत्किंचिद्वृत्त्यभिव्यक्तचैतन्याभिन्नतया सर्वस्यापि प्रपञ्चस्य तदापत्तेः; न द्वितीय इत्याह— **स्वत इति**। अत एव निरतिशयानन्दरूपं ब्रह्म ममापरोक्षं न प्रकाशत इति व्यवहार इति भावः। ततश्च ज्ञानभिन्नभावकरणकत्वमेव ज्ञानस्यापरोक्ष्यं तद्विषयत्वं चार्थस्य। यथोक्तकरणकत्वं च ज्ञानस्य यद्विषयावच्छेदेन तस्यैवापरोक्षत्वमिति न तत्तांशस्यापरोक्षत्वम्। साक्षिण्यप्यन्तःकरणजन्यसूक्ष्मान्तःकरणवृत्त्यभ्युपगमान्नाव्याप्तिः। यद्वा ज्ञानतदभावाकरणकज्ञानस्यानुभवत्वं ज्ञानस्यापरोक्ष्यम्, तज्जन्यव्यवहारयोग्यत्वमर्थस्येति न कोऽपि दोष इत्यभिप्रायेणाह— **तत्रेति**। नन्वेवमपि तस्यैव तत्फलत्वनियमादिति हेतुरयुक्तः, ब्रह्मात्मैक्यसाक्षात्कारे वेदान्तवाक्यस्य हेतुत्वावगमादिति चेत्, तत्र वक्तव्यम्— किमन्तःकरणस्य निर्विशेषब्रह्मसाक्षात्कारजननसामर्थ्ये नास्ति प्रमाणमिति ब्रवीषि, किं वा सति सामर्थ्ये इदानीमपि तं जनयेदिति, उत शब्दोऽपि तज्जननसमर्थ इति, अथ वा इदानींतनाहंप्रत्ययवत्तदानींतनस्याप्यन्तःकरणजन्यत्वाविशेषेण भ्रमत्वं स्यादिति, अपि वा तत्प्रमात्वसिद्ध्यर्थमन्यापेक्षणे परतस्त्वापात इति, आहो ब्रह्मणो मनोगोचरत्वनिषेधकश्रुतिविरोध इति, यद्वा वेदान्तवाक्यसहकृतस्यान्तःकरणस्य साक्षात्कारजनकत्वाभ्युपगमे शब्दस्य परोक्षज्ञानजनकत्वस्वाभाव्यादपरोक्षे च ब्रह्मणि शब्दजन्यस्य परोक्षज्ञानस्य भ्रमत्वापत्तौ वेदान्तवाक्यस्य प्रमाणत्वभङ्ग इति, अथ वा 'तं त्वौपनिषदम्' इत्यादिश्रुतिबलाच्चरमसाक्षात्कारे वेदान्तवाक्यस्यैव हेतुत्वमवगम्यत इति। नाद्यः, सोपाधिकसाक्षात्कारे क्लृप्तत्वेन निरुपाधिकसाक्षात्कारेऽपि तत्कल्पनादित्याह— **अन्तःकरणं चेति**। न द्वितीयः, सहकारिविरहादिदानीं तदजनकत्वेऽपि यथोक्तसहकारिसमवधानेन तदानीं ब्रह्मात्मैक्यसाक्षात्कारजनकत्वसंभवादित्याह— **तत्त्विति**। न तृतीयः, क्वचिदप्यक्लृप्तेरित्याह— **शब्दस्त्विति**।
११८ **अन्धादेरिति**। त्वगिन्द्रियविकलोऽन्ध इहान्धादिशब्देनोच्यते; तस्य दशमोऽहमिति ज्ञानं शरीरांशे परोक्षमेव, बाह्येन्द्रियस्य तत्प्रत्यक्षजनकस्याभावात् अन्तःकरणस्य संनिकर्षविरहेण

तत्रासामर्थ्याज्ज्ञानस्य प्रत्यासत्तित्वानङ्गीकारात् अत एव प्रत्यभिज्ञायास्तत्तांशे नापरोक्ष्यमिति भावः । न चतुर्थः, स्वतःप्रमाणवेदान्तवाक्यजन्यभावनाया अपि तत्र हेतुत्वाभ्युपगमेन वैषम्यादित्याह– **अपि चेति** । अन्तःकरणजन्या अपरोक्षधीः वेदान्तवाक्यजज्ञानभावनाजा यतः, अतो वेदान्तवाक्यरूपमूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यत इत्यर्थः । न पञ्चम इत्याह— **न चेति** । अपवादः अप्रामाण्यबुद्धिः । मूलशुद्धिर्मूलप्रमाणदार्ढ्यम् । न षष्ठ इत्याह-- **दृश्यते त्विति** । ननु 'यन्मनसा न मनुते' इत्यपि श्रुतिर्दृश्यते; अत आह— **नयबृंहितेति** । 'दृश्यते' इत्यादिश्रुतेरैकाग्र्यादिविशिष्टमनोविषयतया विशेषश्रुतित्वेन विशेषशास्त्रप्राबल्यन्यायोपबृंहिततया प्राबल्यादिति भावः । न सप्तमः, ब्रह्मणि परोक्षत्वानवगाहनादित्याह-- **यत्साक्षादिति** । **सा त्विति** । प्रत्यक्षार्थविषयकानुमितिवदिति भावः । न चरमः, क्लृप्तादन्तःकरणादेव चरमसाक्षात्कारसंभवे तदानीमपि तत्त्वमस्यादिवाक्यानुसंधानकल्पने प्रमाणाभावेन 'यतो वाचो निवर्तन्ते' 'यद्वाचानभ्युदितम्' 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिश्रुतिभिः शब्दस्य साक्षात्कारजनकत्वनिषेधेन च 'तं त्वौपनिषदम्' इत्यादिश्रुतेः परोक्षज्ञानजनकत्वपरत्वादित्याशयेनाह-- **इति सर्वमवदातमिति** । **स्वरूपप्रकाशस्येति** । जीवस्वरूपप्रकाशस्य ब्रह्माभेदसाक्षात्कारेण तदभिव्यक्तितिरोधायकाविद्यानिवृत्तिरूपामभिव्यक्तिं संस्कारमुपपाद्य व्यञ्जकान्तःकरणवृत्तेरुत्पाद्यताम् न चासावनुत्पादितेत्यादिटीकया प्रागुपेक्षितामुपपादयतीत्यर्थः । **असमुच्चयमतेऽपीति** । चित्तशुद्धिद्वारैव कर्मणामुपयोगः न तु भावनासमुच्चितानां तेषां ब्रह्मात्मत्वसाक्षात्कारे हेतुत्वमिति सिद्धान्तिमतेऽपीत्यर्थः । न हीत्यादिटीकायाः शाब्दज्ञानप्रकाश्यं ब्रह्म कालान्तरे स्वप्रकाशं न भवतीति न हीति योजनां निराकरोति— **स्वप्रकाशस्यैवेति** । **परिहारसाम्यमिति** । वृत्तिविषयत्वं स्वप्रकाशत्वं च विरुद्धमिति शङ्कायां स्वरूपेण ब्रह्म स्वयंप्रकाशमुपहितरूपेण तु न स्वप्रकाशमिति परिहारसाम्यमित्यर्थः । **ननु निरुपाधीति** । अन्यथा तस्य सर्वोपाधिनिवर्तकत्वायोगादिति भावः । **कथमुपहितमितीति** । यदुपाध्युपहितब्रह्मसाक्षात्कारः संसारनिवर्तकस्तदुपाधिनिवर्तकसाक्षात्कारेऽप्युपाध्यन्तरगवेषणायामनवस्थापातादिति भावः । टीकायाम्— तस्यैवेति । अन्ततस्तस्यैवेत्यर्थः, तदानीमुपाध्यन्तराणामपि सत्त्वात् । अत एवाह— स्वपरोपाधिविरोधिन इति । ननु कथं ब्रह्मसाक्षात्कारस्य स्वपरोपाधिविरोधित्वम्; न च तस्य निरुपाधि ब्रह्मेत्याकारस्य निरुपाधित्वेन वेषेण सकलोपाधिव्यतिरेकविषयतया सकलोपाधिविरोधित्वमिति वाच्यम्, उपाधौ सति तदाकारत्वस्यैवायोगादित्याशङ्क्य मिथ्याभूतोपाधिसद्भावो न वास्तवनिरुपाधित्वसाक्षात्कारविरोधीत्यभिप्रायमाह-- **निरुपाधीति** । ननु साक्षात्कारेण सर्वोपाधिनिवृत्तौ तदनन्तरं निरुपाधिकमेव तद्विषयः स्यादित्याशङ्काम् उपाधिनिवृत्त्यनन्तरं नास्त्येव साक्षात्कारः तत्सत्तायामुपाधीनां विनश्यत्तैव न तु विनाश इति निराकर्तुं विनश्यदवस्थस्येति टीकेत्याशयेनाह-- **ततः स्वसत्तायामिति** । वृत्त्युपहितं विषय इति यदन्वयः— किं वृत्तिविशिष्टमुत वृत्त्यवच्छिन्नं किं वा वृत्त्युपलक्षितमिति; नाद्य इत्याह— **वृत्तिविशिष्ट-**

११९
१२०

**स्येति** । द्वितीये किं वृत्तेर्ज्ञायमानतयावच्छेदकत्वमुताज्ञायमानतया ? नाद्य इत्याह— **वृत्त्यवच्छिन्नेति** । न द्वितीय इत्याह- **विशेषणेति** । विशेषकस्यावच्छेदकस्याग्रहे तद्विशेषितस्याग्रहादित्यर्थः । ततश्च शुद्धात्मविषयकत्वमेव स्यादिति भावः । तृतीयं दूषयति— **उपलक्षितस्य त्विति** । अविद्यमानस्याप्युपलक्षणत्वसंभवादिति भावः । द्वितीयद्वितीयमादाय परिहरति— **उच्यत इति** । तत्पक्षोक्तं दोषमुद्धरति— **अतो वृत्तीति** । उपाधिसंसर्गे सति शुद्धस्यैव विषयत्वात्संसर्गपृथक्कृतं तु स्वप्रकाशत्वमित्यभ्युपगमान्न दोष इति भावः । ननु ब्रह्मण उपाधिसंबन्ध उपाधिप्रतिबिम्बितत्वम् , तच्च विषयविषयिभावनिमित्तकम् ; स चोपाधिसंबन्धाधीन इति परस्पराश्रय इति शङ्कते— **नन्विति** । विषयविषयित्वलक्षण इति विषयविषयित्वं लक्षणं निमित्तं यस्येत्यर्थः । टीकायां चैतन्यच्छायापत्तेरावद्यिकत्वमुक्तम् , तावता कथमुक्तदोषपरिहार इत्यत आह— **न ब्रह्मेति** । चैतन्यप्रतिबिम्बितत्वमिति । प्रतिबिम्बितचैतन्यकत्वमित्यर्थः । आहिताग्न्यादिराकृतिगणत्वान्निष्ठान्तस्य न पूर्वनिपातनियमः । स्वत इत्यत्र

१२१ हेतुमाह- **घटादीति** । तासां ब्रह्माविषयकत्वेऽपि प्रतिबिम्बितचैतन्यकत्वदर्शनादिति भावः । चैतन्यस्य ब्रह्मभेदभ्रान्तिं वारयन्नाह— **चैतन्यं चेति** । **भ्रमत्वमिति** । संसारदशायामप्रकाशमानं ब्रह्म परोक्षमिति तत्रापरोक्ष्यावगाहित्वादिति भावः । किं स्वरूपस्य पारोक्ष्यमुत शुद्धानन्दात्मत्वादेः किं वोपाधिविरहस्य ? नाद्य इत्याह— **तत्राहेति** । द्वितीयं शङ्कते— **जीवेति** । **पारोक्ष्यादिति** । जीवाभिन्ने ब्रह्मणि भासमानेऽप्यभानात्तेषां ततो भेदः, इतरथा स्वरूपस्याप्यभानापत्तौ जीवब्रह्माभेद एव न सिद्ध्येदिति भावः । शुद्धयादीनां स्वरूपाभेदेऽप्यभानमुपपद्यत इत्याह— **शुद्धयादीनामिति** । न च शुद्ध्यादेस्तिरोधाने तदभिन्नस्य स्वरूपस्यापि तिरोधानापत्तिः, एकस्यापि स्वरूपस्य कर्तृत्वभोक्तृत्वजडत्वाद्यशुद्धिराहित्यव्यवहारानुकूलस्फुरणांशे अघटनघटनापटीयस्या अविद्यया तिरोधानेऽप्यसत्त्वाप्रियत्वादिराहित्यव्यवहारानुकूलस्फुरणांशे तदभावादिति भावः । तर्हि साक्षात्कारदशायामपि सतामुपाधीनां कथं तेन निवृत्तिरित्याशङ्कायां सहकारिसाचिव्यादिति प्रागुक्तं स्मारयंस्तृतीयं शङ्कते— **वेदान्तेति** । वेदान्तजज्ञानेन वेदान्तज्ञानजन्यज्ञानमूलकभावनापरिपाकसहकृतान्तःकरणजन्यज्ञानेनेत्यर्थः । ननूपाध्यभावस्य स्वरूपानतिरेके निरुपाधिकं ब्रह्मेति कथं तद्वत्त्वव्यवहार इत्याशङ्कां दृष्टान्तेन निराकरोति— **यथेति** । तस्मादित्यादिटीकाव्यावर्त्याशङ्कामाह—

१२२ **नन्विति** । **तद्रूपेणेति** । षड्जादीनां षड्जत्वादीनां च योग्यतया श्रोत्रेन्द्रियेण ग्रहणेऽपि नायं मध्यमः किं तु षड्ज इति व्यवहारानुकूलेन रूपेण न व्यज्यन्ते गान्धर्वशास्त्रजन्यज्ञानमूलकभावनापरिपाकसहितेन तु श्रोत्रेण व्यज्यन्त इत्यर्थः । **निषादेति** । शरीरे वीणादिषु च प्रथमं श्रूयमाणाः श्रुतिसंज्ञकास्तत्तत्स्थानभेदभिन्ना नादा द्वाविंशतिः । तत्र चतुस्त्रिद्विसंख्याकश्रुत्यवयवशालिनस्तदनन्तरभाविनो घण्टानादानुरणनसदृशाः अनुरणनात्मका निषादादयः सप्त स्वतो रञ्जकत्वात्स्वराः । तत्र षड्जमध्यमपञ्चमाश्चतुश्चतुःश्रुतिकाः । ऋषभधैवतौ त्रिस्त्रिःश्रुतिकौ । निषादगांधारौ द्विर्द्विःश्रुतिकाविति विवेकः । तेषां स्वराणां समुदायाः षड्जमध्यमगांधारस्वरप्रभवा नन्द्यावर्तजीमूतसुभद्राख्यास्त्रिविधा ग्रामाः । तेषु ग्रामेषु क्रमेण स्वराणामारोहावरोहाभ्यां निवेशाः प्रतिग्रामं सप्तधा भिन्ना एकविंशतिमूर्च्छनाः ।

तदुक्तम्— 'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥ श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥ श्रुतिभ्यः स्युः स्वराः षड्जर्षभगांधारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्तमः ॥ यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति वै । तथा स्वराणां संदोहो ग्राम इत्यभिधीयते ॥ षड्जग्रामो भवेदादौ मध्यमग्राम एव च । गांधारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ॥ नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः । षड्जमध्यमगांधारास्त्रयाणां जन्महेतवः ॥ क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्च्छनेत्युच्यते ग्रामस्था एताः सप्त सप्त च' इति । अत्रोच्यत इत्यादिनापि समुच्चयनिराकरणादस्य ततो भेदं दर्शयति— **समुच्चयपक्षमिति** । समुच्चयस्य सामान्येन निराकरणमिह, उत्तरत्र तु तद्विशेषनिराकरणमिति भावः । अत एव विकल्पयति— **तत्र किमिति** । टीकायाम्— निश्चितेऽपि तत्त्व इति । औपाधिकभ्रमस्योपाधिनिवृत्तिमन्तरा निवृत्त्यभावेन विपर्यासानुवृत्तिसंभवादिति भावः । टीकायाम्— तेनेति । विद्यासहकृतेन तेन कर्मणा अविद्यातत्कार्यसमुच्छेदश्चोपपद्यत इत्यर्थः । **सजातीयाश्चेति** । स्वपरविरोधिन इति । द्वन्द्वगर्भे षष्ठीतत्पुरुषे, ततः सजातीयपदस्य कर्मधारय इति भावः । टीकायाम्— अनाद्यविद्येति । अविद्यारूपं यत्परिणाम्युपादानं यच्च देहादि तद्व्यतिरिक्तेरित्यर्थः । टीकायाम्— व्यवहारप्रत्ययानिति । व्यवहारान्प्रत्ययांश्चेत्यर्थः । टीकायाम्— मिथ्येति मन्यमान इति । दोषनिमित्तकान्मन्यमानस्तद्विषयस्य वास्तवत्वं नाध्यवस्यतीत्यर्थः । **वास्तव इति निश्चयवत इति** । अन्यथा बहुवित्तव्ययायाससाध्येषु कर्मसु प्रवृत्त्यनुपपत्तेरिति भावः । प्रमारूप एव निश्चय उक्त इति मत्वा शङ्कते— **नन्विति** । भ्रमप्रमासाधारणनिश्चयमात्रेणैव निष्कम्पप्रवृत्तिसिद्धेर्न प्रमात्वं विवक्षितमित्याशयेन परिहरति— **इत्याशङ्क्याहेति** । **क्यषन्तस्य रूपमिति** । लोहितादेराकृतिगणत्वादिति भावः । लोहितादिभ्यो डाजन्तेभ्यश्च क्यष्प्रत्ययो भवतीति सूत्रार्थः । अभूततद्भावे क्यषो विधानात् प्रकृते तमर्थं दर्शयति— **अविद्वानेवेति** । शास्त्रसिद्धेन मिथ्यात्वेन क्रियाकर्त्रादिविभागमविद्वानेव सन्यः सत्यत्वेन वेत्ति स विद्वान् विद्वदाभास इत्यर्थः । नन्वभूततद्भावस्थले पूर्वावस्थोपमर्दो नियतः, यं प्रकारमप्राप्तस्तत्प्राप्ताविति तदर्थात्; न च मृदं घटीकरोतीत्यादौ तदभावः, तत्राप्यघटावस्थायाः प्रागभावरूपायाः सूक्ष्मतारूपाया वोपमर्दसत्त्वात्; प्रकृते च मिथ्यात्वेनाविदुषस्तेन रूपेण विद्वत्तानभ्युपगमे कथं तस्मिन्नर्थे प्रत्यय इति चेत्, न; अविद्वदवस्थोपमर्दस्य प्रकृतेऽपि सत्त्वात् तावतैव विधित्सितप्रत्ययार्थसंपत्त्या विशेषणांशेऽपि तदनपेक्षणात् । अत एव जलरूपेणासमुद्रोऽपि समुद्रीभवति प्रभुरयं गम्भीरतयेत्यादिव्यवहारः । न च लोहितादिसूत्रभाष्ये 'नायं हलन्ताद्विधीयते' इति निषेधात्कथं प्रकृते विद्वस्शब्दात्क्यषिति वाच्यम्, सूत्रकारमतानुरोधेन क्यषाश्रयणात्, अन्यथा 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति वार्तिकेन लोहितशब्दादन्यतः क्यषो निषिद्धतया भाष्यपर्यन्तधावनवैफल्यात् । न चैतदपेक्षया श्येनायते काक इत्यादिवत् 'कर्तुः क्यङ् सलोपश्च' इति सूत्रविहितक्यङन्तत्वमेव युक्तमिति वाच्यम्, तथात्वे मिथ्याभूतं क्रियाकर्त्रादिविभागं सत्यत्वेन विद्वान्विद्वदाभास इत्यर्थालाभात् विद्वानिवाचरतो-

त्वस्य तन्निष्ठदम्भादिगुणयोगेनाप्युपपत्तेः। अत एव श्येनायते काक इत्यादौ श्येनाभासः काक इति न प्रतीयते, अत एव च सौमनस्यलेशरहितेऽपि शोकिनि व्यवहार-गुणयोगेन सुमनायत इति व्यपदेश इति ध्येयम्। अतःशब्दार्थं दर्शयन्नत एवे-त्यादिटीकाभिप्रायमाह— **अत एवेति**। इतिहेतौ। अविद्वान्कर्मकाण्डेऽधिकार्यभिमत इत्यत एव हेतोरविद्वद्विषयत्वं प्राक्चेत्यादिभाष्येण वर्णयांबभूवेत्यर्थः। अनधिकारिकृते वैदिके कर्मणि फलाभावे लौकिकेऽपि कर्मणि न प्रवर्तेतेत्याशङ्क्य वैदिके कर्मणि श्रद्धाया अप्यङ्गत्वेन तदभावे फलाभावेऽपि लौकिके यथोचितफललाभसंभवान्न प्रवृत्त्यनुपपत्तिरित्युक्तं टीकायाम्— तेन

१२५ दृष्टार्थेष्विति। **प्रतीयमानेति**। प्रत्यक्षादिभिः प्रमाणैः प्रतीयमानस्य कर्माधिकारनिमि-त्तस्य ब्राह्मण्यादेरित्यर्थः। **इतरथेति**। न चेष्टापत्तिः, नास्तिकविषये प्रत्यवायाधिक्येन

१२६ प्रायश्चित्ताधिक्यस्मरणादिति भावः। **भक्तिरूपेति**। वक्ष्यमाणदेवताभक्तिरूपेत्यर्थः। **वि-श्वासात्मिकेति**। वेदबोधितत्वादिदमित्थमेवेत्येवंरूपेत्यर्थः। 'नश्रद्दधानः' इति। नञ्समासे 'नलोपो नञः' इति नकारलोपे अश्रद्दधान इति स्यात्, अत आह— **नका-रोऽयमिति**। **प्रतिषेधवाचीति**। 'अमानोनाः प्रतिषेधे' इति स्मरणादभावप्रवृत्तिनिमि-त्तकोऽयं नशब्दो भिन्नवार्चीत्यर्थः। ततश्च 'गामिकर्मीकृतनैकनीवृता' इत्यादाविव नशब्दस्यायं समासो न नञ इति भावः। अतःशब्दो न पूर्वोक्तपरामर्शी, किं तु वक्ष्यमाण-

१२७ परामर्शीत्याह— **यत एवेति**। **एतदिति**। अतःशब्दोक्तमेव विभजत इत्यर्थः। 'न कर्मणा' इत्यादिश्रुतेरर्थमाह— **पितृमनुष्येति**। धनशब्दलक्षिता अपरविद्या सगुणविद्या। धनशब्दस्य देवलोकाप्तिहेत्वपरविद्यापरत्वे किं प्रमाणमित्याशङ्क्य श्रुत्यन्तर-मेव प्रमाणमित्याशयेनाह— **तथा हि श्रुत्यन्तरमिति**। ज्ञानोत्पत्त्युपयोगिनां कर्मणां न प्रयाजादिवदारादुपकारकत्वं संभवतीत्यत आह— **आराद्दूर इति**। तथा च साक्षात्कारापेक्षया व्यवहितामिच्छां चित्तशुद्धिद्वारेणोत्पादयतामेव कर्मणां ज्ञानोत्पत्तावुप-कारकत्वादिति टीकार्थ इति भावः। **प्रधानेन प्रत्ययार्थेनेति**। ननु ये प्रतितिष्ठासन्ति-त एता रात्रीरुपेयुः इत्यादौ सन्प्रत्ययवाच्येच्छाविषयीभूतायाः प्रतिष्ठाया एव फलत्वावगमा-दिष्यमाणस्य वेदनस्यैव प्रकृतेऽपि फलत्वं युक्तमित्याशङ्क्य धात्वर्थस्य समानपदोपात्तस्यापि कष्टात्मकत्वेन तदुल्लङ्घनेन भावनाया अन्यत्र पदान्तरोपात्तस्वतःसुन्दरप्रतिष्ठादिभाव्यक-त्वेऽपि प्रकृते संनिहितसन्प्रत्ययोपात्ताया ज्ञानवत्फलांशरस्कत्वेन फलभूताया इच्छाया एव साधनचतुष्टयसंपन्नया बुद्ध्या जिज्ञासेतेत्यादिप्रयोग इव यज्ञादिकरणकभावनाभाव्यत्वमिति टीकाभिप्रायमाह— **आख्यातेति**। न च विषयसौन्दर्यलभ्यत्वादिच्छायास्तत्र कर्मवैफल्यम्, ब्रह्मविचारप्रवृत्तिपर्यन्तायास्तस्यास्तत्प्रतिबन्धकदुरितनिबर्हणाधीनत्वेन तद्द्वारा कर्मणामि-च्छोपयोगसंभवादित्याशयेन दुरितनिबर्हकत्वं कर्मणामुक्तं टीकायाम्— एतानि चेत्या-दिना। तत्र शातपथश्रुतौ 'वेद' इत्यस्य वेदनपूर्वकमाचरणमर्थः, अत एव तस्यात्मयाजि-त्वमित्याशयेनाह— **यो विदित्वेति**। 'स ह' इति हशब्देन पूर्ववाक्योपात्तदेव-

१२९ याज्यपेक्षया आत्मयाजिन आधिक्यं प्रदर्श्यत इत्याशयेनाह— **स च देवयाजिन इति**। पञ्चम्यन्तं पदद्वयम्। यज्ञादेः प्रकृतत्वम् 'स च देवयाजी' इत्यादिवाक्य इत्याह— **स च देव-**

**याजीत्यत्रेति** । श्रुतिस्मृत्योरुदाहृतत्वात्पुनस्तदुदाहरणं व्यर्थमित्याशङ्क्य कर्मणां दुरित- १२९ निबर्हकत्वे श्रुतिस्मृती उदाहृत्य तद्द्वारा ज्ञानोपयोगेऽपि श्रुत्यन्तरं सोपस्कारमाहेत्याशयेनाह— **श्रुत्यन्तरमाहेति** । कर्मणां मोक्षोपयोगस्य पूर्वमेव निराकृतत्वात्कल्प्तेनेत्यादिटीकावैयर्थ्य- माशङ्क्य ज्ञानानन्तरं कर्मानुष्ठानासंभवात्तेषां मोक्षोपयोगः पूर्वं वारितः ; इदानीं ज्ञानात्पूर्व- भाविनामेव नित्यानामिव काम्यानामपि कर्मणां विविदिषाद्वारा ज्ञाने समुच्चयं निराकर्तुमियं टीकेत्याह— **नित्यानामिति । तत्राहेति** । कर्मणां मोक्षोपयोगः 'न कर्मणा—' इत्यादिश्रुति- १३० विरुद्धत्वाच्छङ्कितुमेवानर्हः । अथ काम्यानामपि ज्ञानहेतुत्वमस्त्विति तत्राहेत्यर्थः । किं काम्यानां कर्मणां क्लृप्तेनैव द्वारेण ज्ञानोपयोग उत कल्प्येन? नाद्यः, अनाकाङ्क्षितत्वादित्याह— **नित्यानां फलमिति** । द्वितीयं निराकरोति— **तत्र यथेति** । 'समानमितरच्छ्येनेन' 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवाचनिकातिदेशस्थले प्राकृतोपकारविलक्षणो नोप- कारः कल्प्यते क्लृप्तेन प्राकृतेनैव वचनस्य चारितार्थ्यात्, एवमिहापीत्यर्थः । न च 'यज्ञेन' इत्यादिश्रुत्यसंकोचाय द्वारान्तरकल्पनं युक्तम्, स्वर्गकामश्रुतेः क्लृप्ताग्निविषत्रै- वर्णिकविषय इव 'यज्ञेन' इत्यादिश्रुतेरपि क्लृप्तपापक्षयद्वारकनित्यकर्मविषये संकोचसंभवादिति भावः । तर्हि पापक्षयफलकत्वेन क्लृप्तानां पवित्रेष्ट्यादीनां काम्यकर्मणामप्यस्तु विविदिषावा- क्येन विनियोग इत्याशङ्कां निराकर्तुं नित्यफलेत्युक्तम् । तथा चावश्यकर्तव्यनित्यानुष्ठान- जन्यं पापक्षयमादाय चरितार्थः 'विविदिषन्ति' इति विधिः न पापक्षयाय नियमेन पवित्रेष्ट्याद्यनुष्ठानमपि प्रयोजयति । अत एव द्रव्यार्जनप्रवृत्तब्राह्मणलाभेन चरितार्थत्वात् 'ऋत्विजो वृणीते' इति विधिर्न क्षत्रियादेरार्त्विज्यं प्रयोजयतीति भावः । ननु नित्यकर्मणां पापक्षयद्वारकल्पनावसरे नित्यकाम्यसाधारण्येनैव यत्किंचिद्द्वारकल्पनं युक्तमित्यत आह— **पापक्षयस्य चेति** । 'ततस्तु तम्' इत्यत्र ततःशब्देन 'विशुद्धसत्त्वः' इति पूर्वनिर्दिष्टचित्त- १३१ शुद्धिपरामर्शादिति भावः । ननु नित्यकर्मणामेव विविदिषाद्वारा ज्ञाने विनियोगे विविदिषा- वाक्यमनर्थकं नित्यानां पापक्षयफलकत्वस्य तत्तद्विधिभिरेव सिद्धेः तद्द्वारा ज्ञानोपयोगस्य च 'ततस्तु तम्' इत्यादिश्रुतित एव सिद्धेः, ततश्च तदानर्थक्याद्वरं काम्यसाधारण्येन द्वारान्तरकल्पनमित्याशङ्क्य निराकरोति— **न च वाच्यमिति । विशेषत इति** । नित्य- विधिबलान्नित्यानां सामान्यतः पापक्षयफलकत्वं सिध्येत् तच्च यत्किंचित्पापक्षयमादायापि पर्यवस्यति, न तु ज्ञानोत्पत्तिप्रतिबन्धकपापक्षयमेवेत्यर्थः । ननु ज्ञानोद्देशेनानुष्ठीयमानैर्नित्यकर्म- भिरर्थात्तत्प्रतिबन्धकपापक्षय एव सिध्येदित्याशङ्क्य तदुद्देशेनानुष्ठानमेवैतद्वचनलभ्यविनियो- गाधीनमित्याशयेनाह— **अस्मिंश्चेति । इतरथेति** । ज्ञानमनुद्दिश्य कर्तव्यमित्येव नित्यान्य- १३२ नुतिष्ठतः प्रत्यवायपरिहारमात्रमित्यर्थः । **अनियतेति** । पूर्वस्मिञ्जन्मनि ज्ञानोद्देशेनानुष्ठितैः कर्मभिर्ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षये सति ज्ञानोत्पत्तिरितरथा नेति न नियतेत्यर्थः । तर्हि स्मृ- तिबलादेव विनियोगोऽस्तु, किं विविदिषावाक्येनेत्यत आह— **ज्ञानमुत्पद्यत इति** । एवमपि 'ततस्तु तम्' इत्यादिश्रुतादेव विनियोगसिद्धेर्विविदिषावाक्यं व्यर्थमित्यत आह— **श्रुति- स्त्विति । तुल्यत्वादिति** । कल्प्यविधिकत्वेन तुल्यत्वादित्यर्थः । **नित्यकाम्येति** । १३३ नित्यानामपि फलवत्त्वेन काम्यत्वादिति भावः । निर्दिष्टेनेनेत्युक्तमिति । ततश्च

शास्त्रनियतेच्छाविषयफलकत्वं नित्यत्वम् अनियतकामनाविषयफलकत्वं काम्यत्वमिति विवेक इति भावः । स्यादेतदित्यतः प्राक्तनटीकाया एषोऽर्थः । नित्यकर्मणां परम्परया ज्ञानोपयोगमुपपादयति— तथा हीति । पाप्मनो निवर्त्यत्वाय तस्यानर्थहेतुत्वं दर्शयति— स हीति । संसारे शरीरादौ अनभिरतिः अनासक्तिः । आरुरुक्षोरिति । योगं ज्ञानयोगं संन्यासमारुरुक्षोः वैराग्यहेतुभूतं कर्म ज्ञानकारणम्, आरूढस्य तु शम एव कारणं न कर्मेत्यर्थः । एवं च कर्मावबोधस्य तस्मिञ्जन्मनि पूर्वभावनियमाभावान्न तदानन्तर्यमथशब्दार्थ इत्याह— एवं चेति । प्राग्भवीयकर्मानुष्ठानादेव चित्तशुद्धिद्वारा वैराग्यसिद्धौ प्रमाणमाह— इममेवेति । ब्रह्मचर्यं समाप्य गृही भवेदित्यादिक्रमपक्षात्पक्षान्तरपरिग्रहार्थो यदि वेति शब्दः । इतरथेति । वैराग्ये सतीत्यर्थः । अत एवेति । उक्तश्रुतिविरोधादेवेत्यर्थः । ब्रह्मचारिण इति । संपन्नवैराग्यस्येति शेषः । ऋणापाकरणफलस्य चित्तशुद्धेः सिद्धत्वादपि न ब्रह्मचारिणा ऋणापाकरणं कर्तव्यमित्याशयेनाह— गृहस्थस्यापीति । ननु 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रम्' इत्यादिश्रुत्या जरामरणपर्यन्तं शरीरस्य भस्मतापर्यन्तं च कर्मणोऽनुष्ठेयत्वावगमात्कथं कर्मत्याग इत्याशङ्क्य पूर्वोदाहृतविधिश्रुतिबलादनयोरर्थवादयोरविद्वद्विषयत्वमित्याह— जरामर्येति । न चेत्थमिति । ब्रह्मजिज्ञासान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगीत्यर्थ इति । **हेतुहेतुमद्भावाभावेऽपीति** । ननु पूर्वतन्त्रव्युत्पादितवेदप्रामाण्यकर्मभेदशेषशेषिभावादिविचारस्य प्रकृतेऽप्यपेक्षणात्कथं हेतुहेतुमद्भावाभाव इत्याशङ्कां निराकर्तुं धर्मब्रह्मावबोधयोरित्युक्तम् । अनुष्ठानोपयोगिनः कृत्स्नकर्मावबोधस्य ब्रह्मविचारं प्रति हेतुत्वं वार्यते तदेकदेशस्य कोशव्याकरणतर्कपातञ्जलादीनामिव सत्यप्युपयोगे न तदानन्तर्यमथशब्दार्थः । ब्रह्मविचारे प्रवृत्तस्यापि यदा यदपेक्षितं तदा तदवबोधसंपादनसंभवात् अन्यथा कोशाद्यवबोधानन्तर्यमप्यथशब्दार्थः स्यादिति भावः । **आरादुपकारकत्वादिति** । तत्संभवादित्यर्थः । नियामकश्रुत्यभावादिति पूर्वपक्षहेतुरसिद्धः प्रयोगविधेरेव न्यायसहकृतस्य क्रमविशेषनियामकत्वादित्याशयेनाह— **पदार्थेति** । अग्निहोत्रहोमस्य किं प्रयोजकं द्रव्यं पाकस्य च किं प्रयोजनमित्येवं पदार्थयोः प्रयोजकप्रयोजनापेक्ष इत्यर्थः । न्यायमाह— **न चेति** । **अनुष्ठानापेक्षेति** । ततश्च प्रयोगविधिरनुष्ठानापेक्षितक्रमपरत्वमपि समिदादिवाक्यानां गमयतीति भावः । नन्वनुष्ठानकालीनस्मरणानां मन्त्रैरेव संपाद्यत्वान्न विधिवाक्यानि तदर्थानीत्याशङ्क्य यत्र मन्त्रा न पठिता यत्र वा कर्मणि प्रतिशाखमैकैकश्येन पठिताः तत्र विधिपाठक्रमोऽपि दृष्टार्थत्वादनुष्ठानक्रमनियामकत्वेनेष्यत इत्याशयेनाह— एवं पाठक्रमोऽपीति । **तद्विधानाच्चेति** । सहत्वविधानात् प्रकृतितः प्राप्तः प्रथमं सोमप्रणयनानन्तरमग्नीषोमीयस्ततः सवनीयस्ततोऽवभृथानन्तरमनूबन्ध्य इत्येवंरूपः क्रमो निवर्तेत इत्यर्थः । त्रिवृता यूपमिति । त्रिगुणया रशनयेत्यर्थः । सूत्रव्याख्यानेन सिद्धान्तमाह— **स्थानादिति** । **ततः प्रथममिति** । आश्विनग्रहग्रहणोत्तरकालं बद्धक्रमेण तेनैव सवनीयस्योपस्थापितत्वात्तदीयमेवोपाकरणमादौ कर्तव्यमित्यर्थः । **प्रधानार्थत्वादङ्गानामिति** । अङ्गानामशास्त्रीयविप्रकर्षरहितानामेव प्रधानोपकारकत्वादित्यर्थः । मुख्यक्रमादङ्गानां क्रमानादरे अशास्त्रीयं विप्रकर्षं दर्शयितुं प्रधानसंनिकर्षस्य शास्त्रीयत्वमाह— **प्रधानस्य हीति** । ततश्च प्रयोगविध्यवगतमङ्गानां प्रधानसाहित्यं नैकक्ष-

१३५ १३६ १३७

णानुष्ठेयत्वरूपं संभवतीति तत्संनिकर्षरूपं पर्यवस्यति। एवं च यस्याङ्गस्य यावद्भिः स्वप्रधानाङ्गैः प्रधानान्तराङ्गैश्च व्यवधानमन्तरा स्वप्रधानसंनिकर्षो न संभवति ततोऽधिकं व्यवधानमशास्त्रीयमित्याह— **स चेति**। ततश्च सरस्वद्यागस्य निर्वापं प्रथममनुष्ठाय तदनन्तरं सरस्वतीयागस्य निर्वापानुष्ठाने सरस्वद्यागनिर्वापस्य सरस्वतीयागतन्निर्वापाभ्यामुभाभ्यामपि व्यवधानं स्यात्। मुख्यक्रमेण तदनुष्ठाने तु सरस्वतीयागनिर्वापस्य सरस्वद्यागनिर्वापेण तस्य च सरस्वतीयागेनेत्येकेनैव व्यवधानमिति नाशास्त्रीयव्यवधानप्रसक्तिरित्याह— **यदि त्विति**। प्रधानान्तरस्य प्रथमप्रधानस्य संनिधौ यदि तदङ्गानुष्ठानं तदा ततः पूर्वमनुष्ठितानि द्वितीयप्रधानाङ्गानि तेनैव प्रथमप्रधानाङ्गेन शास्त्रानुमतेन व्यवधायकेन स्वप्रधानाद्विप्रकृष्येरन्नित्यर्थः। यद्यपि प्रवृत्तिक्रमोऽप्यत्र संभवति याज्यानुवाक्याप्रवृत्तिक्रमेण पश्चाद्भाविनापि न्यायतौल्येन निर्वापादिक्रमानियमसंभवात् तथाप्यसंकीर्णोदाहरणे क्वचित्क्लृप्तो मुख्यक्रमोऽपि प्रकृते संभवतीत्युदाहृतम्। **प्रोक्षणादिधर्मा इति**। पशुस्नपनादिधर्मा इत्यर्थः। उपाकरणानन्तरभावि- १३८ त्वेन प्रोक्षणस्य प्राथमिकत्वाभावादिति द्रष्टव्यम्। प्रधानस्याङ्गैर्विप्रकर्षः स्यादिति। एकैकस्मिन्पशावुपाकरणादीनां सर्वेषामप्यङ्गानामनुष्ठाने प्रथमपशावनुष्ठितस्य प्रकृतौ प्रधानाव्यवहितपूर्ववर्तितया तथैव चोदकेन प्राप्तस्याङ्गस्य शास्त्राननुमतबहुव्यवधानाद्विप्रकर्षः स्यात्, एकैकस्य पदार्थस्य सर्वेषु पशुष्वनुष्ठाने तु तस्य षोडशभिरेव व्यवधानमिति न विप्रकर्षः स्यादित्यर्थः। श्रुत्यार्थाद्यादिशब्दादर्थपठनस्थानमुख्यक्रमा गृह्यन्ते। **अतः प्रयोगवचनेति**। १३९ अङ्गानां परस्परसाहित्यस्यापि प्रयोगवचनावगतस्य न्यायत एकरूप्यावगमात्तद्भेदे प्रयोगवचनस्य कोपः स्यादिति भावः। **त्रय इति**। 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्यविहितौ द्वावाग्नेयौ। ततश्चाग्नेयोपांशुयाजाग्नीषोमीयास्त्रयः पौर्णमास्यया संबद्धा आग्नेयपयोदधियागास्त्रयोऽमावास्यया संबद्धा इत्यर्थः **आख्यातं कर्तैकस्येति**। तथा चाधिकारावस्थापन्नपुरुषबोधके स्वर्गकामपदे उद्देश्यगतत्वेनैकत्वाविवक्षणेऽपि तस्यैव कर्तृत्वावस्थावहस्योपादेयतया आख्यातेन तद्गतैकत्वविवक्षणादर्थादधिकारिणोऽप्येकत्वं सिद्धमिति भावः। **एकश्चासाविति**। सर्वैरप्यङ्गैरेकस्यैव प्रधानगतस्य फलजननसामर्थ्याद्विबोधरूपस्य स्वस्वासाधारणदृष्टादृष्टावान्तरोपकारद्वारा जननाभ्युपगमादिति भावः। समुच्चित्येति। साधनत्वेन तस्मिन्समुच्चित्योपनिबद्धा इत्यर्थः न तु समुच्चित्य साधनत्वमिति, तदानीं विकृतावेकाङ्गपुनःश्रवणे तस्या विकृतेरुपकाराकाङ्क्षायाः क्लृप्तोपकारप्राकृताङ्गेनैव शान्त्या न तत्र चोदकप्रवृत्तिरिति सिद्धान्तभङ्गापत्तेः, समिदादिवाक्यैः प्रत्येकमेव समिदादीनामुपकारे विनियोगाबोधि ध्येयम्। धर्मब्रह्मविचारयोः शेषशेषिभावाभावादेकप्रयोगवचनपरिग्रहाभावेऽपि पाठक्रमात्क्रमः कुतो न भवेदित्याशङ्कां निराकर्तुं यत्र त्वित्यादिटीका। तत्रायमदेवताकमार्यमणं कर्म। तां टीकामधिकरणप्रदर्शनेन व्याकरोति— **एकादश इति**। यद्यप्येतदधिकरणं पञ्चमाध्यायतृतीयपादस्थम्, तथाप्ये- १४० कप्रयोगान्तर्गताङ्गप्रधानकर्मविचारपरं पञ्चमे नायं विचारो युक्तः, अत एव 'प्रयोज्यगोचरः क्रमस्ततः परं निरूप्यते' इति पञ्चमाध्यायारम्भे उक्तम्। ततश्च सौर्यादिकं किं पूर्वं पूर्वमनुष्ठायैवानुष्ठेयमुत पुरुषेच्छानुरोधेनेत्येवं प्रयोगविशेषविचारात्मक एवायं विचारः। एवं च सत्येकादशे योग्यमपि संगतिलोभात्पञ्चमे स्थितमिति ग्रन्थार्थो बोध्यः। उदाहृतं पूर्वपक्ष-

सूत्रं व्याख्याय 'न वा असंबन्धात्' इति सिद्धान्तसूत्रं व्याचष्टे— **अङ्गेष्विति** । **किं तु पुरुषस्येति** । कदाचिद्बहुष्वपि कामनासंभवादस्ति क्रमाकाङ्क्षेत्यर्थः । अनुक्रान्तमधिकरणमिति-शब्देन समाप्य टीकागतमवर्जनीयतयेत्यादिवाक्यं व्याचष्टे— **युगपदिति** । **क्रत्वर्थत्वेति** । किं क्रत्वर्थत्वमपि उत पुरुषार्थत्वमेवेति संदेह इत्यर्थः । वाक्यलिङ्गाभ्यामुभयार्थत्वमिति

१४१ पूर्वपक्षमाह— **पशुकामस्येति** । **वाक्येनेति** । न च 'गोदोहनेन' इति तृतीयाश्रुत्या 'पशुकामस्य' इति षष्ठीश्रुत्या वा पुरुषार्थत्वसंभवात्कथं वाक्येन पुरुषार्थत्वमिति वाच्यम्, 'गोदोहनेन' इति तृतीयाया अप्प्रणयनक्रियाकरणतावोधित्वात् 'पशुकामस्य' इति षष्ठ्याश्च संबन्धसामान्यबोधकतया शेषशेषिभावबोधनासामर्थ्यात् । एवं च 'पशुकामस्य' इत्यनन्तरं श्रुत्येति केषुचित्कोशेषु पाठः प्रामादिकः । अत एव वाक्यात्पुरुषार्थत्वमित्येवोपसंहृतम् । अथ वा वाक्यात्प्रबलेन लिङ्गेन क्रत्वर्थत्वमेव स्यान्न तु पुरुषार्थत्वमपीत्याशङ्क्य वाक्यो-पोद्बलनाय सामान्यसंबन्धबोधकषष्ठीश्रुतिसमभिव्याहारो वर्णित इति योज्यम् । **किं तु तादर्थ्यमिति** । तदुद्देश्यककृतिसाध्यत्वमेव तच्छेषत्वं न तु तदुपकारकत्वमात्रम्, दध्यानयनस्य वाजिनशेषत्वापत्तेरित्यर्थः । तर्हि पुरुषार्थेन गोदोहनेन चमसबाधे अङ्गविकलः क्रतुः स्यादि-

१४२ त्यत आह— **अङ्गापेक्षा चेति** । अन्यार्थेन क्रतूपकारसिद्धावपि चमसनियमादृष्टवै-गुण्यं तदवस्थमेवेत्याशङ्क्य प्रयोगविध्यनुमतत्वान्न विरोध इत्याशयेनाह— **अन्यार्थस्या-पीति** । **अर्थलक्षणेति** सौत्रपदस्य व्याख्या फलप्रयुक्तेति । अर्थलक्षणेत्यत्र सावधारणत्वमभि-प्रेत्याह— **न विधित इति** । **यथा वेति** । यद्यपि नो खल्वित्यादिटीकातः प्राचीनोऽयं प्रती-कस्तथापि सौकर्याय गोदोहनविषयानुबन्धिनीं टीकां व्याख्याय तदनन्तरं श्रुतिनिराकरणेन

१४३ वेति टीकां व्याख्यातुमधिकरणानुक्रमणाय पुनस्तट्टीकोपादानमिति वेदितव्यम् । **क्त्वाश्रु-तेरङ्गस्येति** । विधायकमित्यर्थः । **तत्रेति** । विधिविभक्तिप्रत्यासत्त्या यजिना सोमयागस्यैव विधेयत्वावगमात्तस्यैव दर्शपूर्णमासाङ्गत्वमित्यर्थः । **तत्कार्यस्येति** । सोमयागकार्यस्य फल-स्येत्यर्थः । ततश्च फलवतः सोमयागस्य प्रत्यभिज्ञाने तस्य प्रयोजनाकाङ्क्षाराहित्यादङ्गत्वेन

१४४ विधिर्न भवेत्, कर्ममात्रप्रत्यभिज्ञाने तु नाङ्गत्वेन विधेर्विरोध इति भावः । **तद्रूपेणेति** । द्रव्यदेवताभ्यां कर्म रूप्यते निरूप्यत इति द्रव्यदेवते कर्मणो रूपम्, तेन भाव्यमित्यर्थः । **अव्यक्तत्वेनेति** । यागप्रतिसंबन्धितया देवतानुपादानरूपमव्यक्तत्वं सोमयागसादृश्यम्, तेने-त्यर्थः । **न विधिसंभव इति** । विहितस्य विधानायोगादिति भावः । बृहस्पतिसवपदं तु धर्म-लक्षणार्थतया सप्रयोजनत्वान्न प्रत्यभिज्ञैकप्रयोजनकमिति न प्रकरणान्तरन्यायप्राप्तकर्मान्तर-विधिस्वारस्यहानमिति वैधर्म्यमाह— **बृहस्पतिसवस्त्विति** । **उत भेदेनेति** । तथा च षडपि यागाः साङ्गाः पृथक्प्रयोज्या इति षड् प्रयोगाः, तन्त्रतायां द्वावेव प्रयोगाविति फलभे-

१४५ दः । **प्रतिप्रधानमिति** । विहितानां पुनर्विधानायोगेन फलवाक्ये कर्मोद्देशेन फलस्यैव विधानादिति **फले विधीयन्त इति** । स्वरूपेण विहितानामपि फलसंबन्धितया पुन-र्विधानं तु फलस्यानुपादेयत्वात् । ततश्च विवक्षितं साहित्यमुपादेयगतत्वादिति भावः । **संग्रह इति** । फलजिज्ञासाभेदाच्चेति भाष्ये धर्मब्रह्मजिज्ञासयोरित्यस्यानुषङ्गादिति भावः । ननु जिज्ञासाया ज्ञानतन्त्रत्वं ज्ञानविषयकत्वं ज्ञानजन्यत्वं वा? उभयथापि न तत्फलं जि-

ज्ञाप्यफलम् अन्यफलस्यान्यफलत्वायोगात्, न च गौणोऽयं व्यवहारः, धर्मब्रह्मजिज्ञासयोः पौर्वापर्यनियमपरिहाराय पारमार्थिकतयैव फलभेदस्य वक्तव्यत्वादित्याशङ्क्य तत्तन्त्रत्वं तत्प्रधानत्वं तदङ्गत्वरूपम् इच्छाया इष्यमाणार्थतया तदङ्गत्वात्, तथा च प्रधानफलमेवाङ्गस्यापि फलमिति भाष्ये ज्ञानफलमिच्छाफलमित्युक्तमिति टीकाभिप्रायमाह— **इच्छाया इति**। ननु भाष्ये तच्चानुष्ठानापेक्षमित्यादिना अभ्युदयनिःश्रेयसफलयोरनुष्ठानापेक्षतदनपेक्षकर्मज्ञानाधीनत्वमुक्तम् । तत्र कर्मणोऽनुष्ठानापेक्षायां ज्ञानस्य तदनपेक्षायां च को हेतुः फलस्य च साध्यत्वनियमेन साधनानुष्ठानेन विना कथं तदुत्पत्तिरित्याशङ्क्य कर्मणः क्रियात्वेन विधेयत्वादनुष्ठानापेक्षा ज्ञानस्य तु नैवं निःश्रेयसस्य च फलत्वं व्यङ्ग्यत्वमात्रेणेत्याह— **विधेयेति**। जिज्ञास्यभेदस्य टीकोक्तमात्यन्तिकत्वं स्फुटत्वमुपपादयितुं फलभेदस्यास्फुटत्वमाह— **क्वचिदिति**। साध्यत्वेन प्रतीतमिति। आप्तेः संयोगरूपत्वादिति भावः । कृतकत्वेऽनित्यत्वं स्यादिति न्यायः । 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादि वचनान्तरम्। **ननु भवतेरिति** । अकर्मकत्वेन न कर्मणि यत्प्रत्ययः भावे च यत्प्रत्यये नपुंसकलिङ्गता स्यात्, भाव्यमनेनेत्यादौ दृष्टत्वात्; कर्तरि च न यत्प्रत्ययविधानमस्ति; अतः कथमखण्डेन निरर्थकेन वा भव्यशब्देन जिज्ञास्यविशेषलाभ इत्यर्थः। 'भव्यगेय– 'इत्यादिसूत्रमदृष्ट्वा शङ्कते— **नन्विति**। **तयोरिति**। तयोर्भावकर्मणोरर्थयोः कृत्याः कृत्यसंज्ञकास्तव्यदादयः क्तप्रत्ययः खलप्रत्ययसमानार्थकाश्च प्रत्यया भवन्तीति सूत्रार्थः। **अचो यदिति**। अजन्ताद्धातोर्यत्प्रत्ययो भवतीति विहितकृत्यसंज्ञकयत्प्रत्ययान्तस्येत्यर्थः। ननु कर्त्रर्थक एवायं यत्प्रत्ययो न भावकर्मार्थक इत्यत्र किं नियामकमिति पृच्छन्तं मन्दं प्रति तद्विशदयति— **अस्य च भवतेरिति** । सुखमनुभवतीत्यादौ सोपसर्गत्वे 'वर्षा भवते मण्डूकः' इत्यादौ वर्षाः प्राप्नोतीति प्राप्त्यर्थकत्वे च सकर्मकत्वादिति भावः। कर्त्रर्थक एवेत्यत्र हेत्वन्तरमाह– **उत्पाद्येति**। भाष्ये निर्दिष्टो धर्म उत्पाद्य एव असिद्धत्वात्। ततश्च भूधातोर्न प्राप्त्यर्थकत्वम् । एवं च न कर्मणि यत्प्रत्ययः भव्यशब्दार्थेन विशेष्यतया धर्मापेक्षणाच्च न भावे यत्प्रत्यय इति भावः । भाष्योक्तमसत्त्वमाक्षिपति— **ननु भवितुरिति**। ननु कर्तुः कारकतया क्रियातः पूर्वं सत्त्वावश्यंभावात्कथं भवितुर्भावयितृव्यापारनिर्वर्त्यत्वमित्याशङ्क्य क्रियाद्वैविध्यकथनपूर्वकं कर्तुरसिद्धस्यापि बुद्धिस्थत्वेन सिद्धतामाश्रित्य कारकत्वं घटं करोतीत्यादौ कर्मण इवेत्यभिप्रायमाह— **भवतिर्हीति**। करोत्यर्थस्येति। घटं करोतीत्यादौ घटं भवन्तं भावयतीत्यर्थावगमाद्भावयिता देवदत्तादिर्भवितुर्घटस्य प्रयोजकः भव्यस्तु घटः प्रयोज्य इत्यर्थः। चोदनाशब्दस्य विधायकवैदिकशब्दवाचित्वाद्ब्रह्मकाण्डे तदभावात्कथं काण्डद्वयसाधारण्येन भाष्ये चोदनाशब्द इत्यत उक्तं टीकायाम्— चोदनेति वैदिकं शब्दमाहेति। **कथं वेद इति** । अपौरुषेयत्वादिति भावः । आज्ञादिस्वरूपकथनपूर्वकं तदसंभवं वेदे प्रकटयन्नुपदेशशब्द इष्टोपायताबोधकशब्दपर इत्याह— **उत्कृष्टेति**। 'तस्य ज्ञानमुपदेशः' इति सूत्रावयवं व्याचष्टे– **तस्य धर्मस्येति**। तद्विषये च यागादाविति टीकायाः स्वविषय इति भाष्यमावृत्त्या योज्यत इत्यभिप्रेत्याह— **धर्मस्येति**। या हि चोदना धर्मस्येति भाष्ये धर्मशब्दनिर्दिष्टा भावना शब्दाच्चोदनापेक्षयोपसर्जनभूतापि

१४६

१४७

१४८

प्रतिपाद्यतया चोदनापेक्षया प्रधानं स्वशब्दार्थ इत्यर्थः। यागादेर्भावनाविषयत्वमुपपादयति टीकायाम्— स हीति। विषयपदव्युत्पत्तेरिति। तथा च यागादिरपि भावनां विषिणोति बध्नाति स्वाधीननिरूपणां करोतीति विषय इति भावः। **अवबोधयतीति**। सा चोदनेत्यन्वयः। भावनाधात्वर्थयोरिति सप्तम्यन्तम्। **नियुञ्जाना चोदनेति**। नियोगं पुरुषप्रवृत्तिं कर्तुकामेत्यर्थः। शानच्प्रत्ययेन बोधनियोगयोर्हेतुहेतुमद्भावावगमादिति ध्येयम्। अत एव वक्ष्यति— **प्रवृत्तिहेतुमिति**। अध्याहारेण भाष्यं योजयति— **ब्रह्मचोदनयेति**। तथा च टीकायामवबोधस्य प्रवृत्तिराहित्य प्रवृत्त्यहेतुत्वमिति भावः। वेदान्तानां ब्रह्मविधिपरत्वाभावेऽपि तज्ज्ञानविधिपरत्वमस्त्विति शङ्कत इत्याह— **ननु मा नामेति**। आत्मा ज्ञातव्य इत्यादीनां ब्रह्मज्ञानविधिपरत्वेऽपि 'तत्त्वमसि' इत्यादीनां सिद्धब्रह्मबोधमात्रविश्रान्तत्वमाविदित्यकमित्याशङ्कां निराकर्तुं तदेकवाक्यतयेति टीकावाक्यं विधेयज्ञानस्तुत्यालम्बनतया सिद्धब्रह्मबोधनान्न तत्र विश्रान्तिरित्यभिप्रायम् इति व्याचष्टे— **विध्येकवाक्यत्वेनेति**। विध्येक-
१४९ वाक्यत्वेन हेतुना स्तुत्यर्थं सिद्धवस्तुबोधनादित्यर्थः। अभिसंधिं भाष्यारूढां करोति— **भाष्य इति**। किं स्वरूपसाक्षात्कारे पुरुषो नियोक्तव्य उत वृत्तिसाक्षात्कारे? नाद्य इत्याह— तस्येति। न द्वितीय इत्याह— अकार्यत्वादिति। साक्षात्कारस्य प्रमाणाधीनत्वेन कृत्यसाध्यत्वादित्यर्थः। टीकायाम्— अत्रैवेति। प्रमाणाधीने बोधे पुरुषस्य नियोगायोग इत्यर्थः। यथा विशिष्टविधाविति। 'सोमेन यजेत' इति विशिष्टविधेर्न विशेषणे सोमनियमेऽपि तात्पर्यम्, यागेन भावयेत्तं च यागं सोमेनेति वाक्यभेदापत्तेः, किं त्वार्थिकविधिविधेयत्वमेवेत्यर्थः। विषयविशिष्टप्रतिपत्तिविधिसामर्थ्यात्प्रतिपत्तिविषयमात्रसिद्धावपि तस्य पारमार्थिकत्वं न सिध्यतीति वैषम्यमाह— **विशिष्टक्रियेत्यादिना**। **वास्तवत्वादिति**। क्रियाविधिस्थले नियमेन तथैव दृष्ट-
१५० त्वादिति भावः। धीविषयत्वादिति। उपासनाया धीविशेषत्वादिति भावः। **तत्क्रम इति**। तयोर्ब्रह्मधीधर्मबुद्ध्योः क्रमेण एकस्मिन्नेव जन्मनि पौर्वापर्ये मानाभावात्स्नानभुज्यादिधीरिव ब्रह्मधीरपि नियोगेन धर्मबुद्धेरनन्तरा न भवतीत्यर्थः। अनित्याद्ब्रह्मण इत्यत्र ब्रह्मण इति षष्ठी। **शास्त्रश्रवण इति**। विवेको भ्रमश्चेत्प्रपञ्चस्य नित्यत्वं ब्रह्मणोऽनित्यत्वं च निश्चितं भवेत्। ततश्च वैराग्याभावेन श्रवणे प्रवृत्तिर्न स्यादित्यर्थः। ननु नित्यानित्यशब्दनिर्दिष्टयोर्धर्मिणोर्वस्तुशब्दनिर्दिष्टानां नित्यत्वसुखत्वादीनां च विवेको नित्यानित्यवस्तुविवेक इति व्याख्यानेऽपि जिज्ञासावैफल्यं तदवस्थमेवेत्याशङ्क्य विशेषरूपेणानिश्चयान्न दोष इत्युक्तमेतदुक्तं भवतीत्यादिटीकया। तत्र तर्हि केन रूपेण निश्चय इत्यतस्तद्रूपमाह— **आत्मानात्मेत्यादिना**। टीकायाम्— निश्चिनोत्येवेति। संपादयत्येवेत्यर्थः। नित्यत्वानित्यत्वनिश्चयमात्रेण न वैराग्यं भवितुमर्हति, अनित्यस्यापि सुखरूपत्वे तत्परित्यज्य सुखेतरस्य नित्यस्यानुपादेयत्वादित्याशङ्क्य तप्तपरशुदृष्टान्तेन सत्याभिसंधस्य मोक्षः अनृताभिसंधस्य बन्ध इति प्रतिपादनात् 'यो वै भूमा तत्सुखमन्यदल्पं तन्मर्त्यं नाल्पे सुखमस्ति' इति च सत्यासत्ययोः सुखदुःखरूपत्वावगमाच्च नित्यत्वानित्यत्वनिश्चयः तत्समनियतसत्यत्वासत्यत्वसुखत्वदुःखत्वनिश्चयमुखेनैव वैराग्यहेतुरिति स्फोरयितुं टीकायां नित्यत्वं सत्यत्वमित्युक्तम्। तत्र च नाभेदो ग्रन्थार्थः भेदस्य लोकसिद्धत्वात्, रज्जुसर्पाद्यपेक्षया सत्यरज्ज्वाद्यव्यापनाच्च। अन्यथा सत्यासत्यवस्तुविवेक इत्येव वक्तुं

शक्ये व्याख्यानसापेक्षनित्यानित्यशब्दप्रयोगो भाष्येऽसंगतः स्यात्; अत एव रंहतिपादादिषु वैराग्याय कर्मफलाद्यनित्यत्वप्रतिपादनम् अतःशब्दव्याख्यानावसरे कर्मफलानित्यत्वबोधकश्रुतिप्राबल्यवर्णनं च; तस्मात्समनियतत्वाभिप्राया टीकेत्याह— **नित्यत्वस्य व्याख्येति** । नित्यत्वस्य विशेषेण सत्यत्वसामानाधिकरण्येनाख्यानं कथनमित्यर्थः । न च क्लिष्टयोजना, श्रुतिलोकसूत्रभाष्यटीकास्वारस्यानुरोधेन तथैव योजनात् । अत एव यद्यपि घटादेरनित्यतावधारितेति पूर्ववाक्यमपीति ध्येयम् । ननूपादानपरित्यागनिमित्तसत्यत्वासत्यत्वादिनिश्चयशिरस्को नित्यानित्यवस्तुविवेकः कथमेतावन्तमनेहसमजायमान इदानीं जायेतेत्याशङ्कां निराकर्तुं सोऽयमित्यादिटीका । तत्रानुभवोपपत्ती विभजते— **दृष्ट इति** । अदृष्टे स्वप्नप्रपञ्चादौ सदधिष्ठानकत्वेनास्फुट इत्यर्थः । उपपत्तिमेवाह— **विगीतमिति** । गन्धर्वपुर्याः सौरालोकोऽधिष्ठानमिति न दृष्टान्ते साध्यवैकल्यम् । आदिशब्देन विमतं नित्यमूलकमनित्यत्वाच्छब्दवदित्यादिकं गृह्यते । **व्याप्त्यसिद्धिमिति** । हेतोरप्रयोजकत्वेनेति शेषः । अनृतं सर्वं सदधिष्ठानकं दृष्टम्, विगीतमप्यनृतं दृश्यत्वादनित्यत्वाच्च; ततश्च हेतूच्छित्तिरेव विपक्षे बाधकस्तर्क इति परिहरतीत्याशयेनाह— **आशङ्क्याहेति** । **किं तु तदभ्यास इति** । जननमरणपरिवृत्त्यादिरूपसंसारबन्धानित्यत्वादिदृढनिश्चयपर्यन्त इति शेषः । **क्रियासमभिहार इति** । 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' इति सूत्रेण पौनःपुन्यार्थे क्रियासमभिहारे सर्वलकारापवादेन लोटस्तस्य परस्मैपदात्मनेपदयोर्यथाक्रमं हिस्वादेशयोश्च विधानेन प्रकृते स्वादेशस्य विधानादित्यर्थः । आभोगशब्दार्थमुक्त्वा नञ्समासेन फलितमर्थमाह— **अतदात्मिकेति** । अनादरात्मिकेत्यर्थः । ज्वाला एव जटा अस्य सन्तीति मत्वर्थे इलच्प्रत्यय इति दर्शयति — **ज्वाला जटाकारा इति** । श्रद्धावित्त इत्यत्र सावधारणत्वं दर्शयन्नाह— **श्रद्धैवेति** । **तथाभिहितमिति** । श्रद्धावित्त इत्यभिहितमित्यर्थः । अथशब्दादिति । तस्य हेत्वानन्तर्यपरत्वादिति भावः । तत्स्वरूपासिद्धिः तत्स्वरूपासंभवः । टीकायाम्— सैव स्थितिः । साधनसंपत्तिरेव स्थित्यर्थः । नरशिरःकपालशौचवदिति दृष्टान्तं विशदयति— **शुचि नरशिर इति** । नारं नरसंबन्धि सस्नेहं वसादियुक्तम् । टीकायाम्— विषसंपृक्तम्, मध्वन्नं वेत्यर्थः । **न्यायहीनमिति** । 'फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्' इति परिमितफलकत्वस्यैव न्याय्यत्वेन कर्मणामनन्तफलकत्वस्य न्यायहीनत्वादिति भावः । **आपेक्षिकेति** । महाभूतप्रलयपर्यन्तावस्थानरूपेत्यर्थः । **अत एव चेति** । अप्रकृतत्वादेव चेत्यर्थः । **तर्हीति** । प्रमाणत्वाविशेषादिति भावः । नित्यानित्यविवेकादेरप्रकृतत्वं परिहरति— **हेतुमदिति** । धर्मजिज्ञासया वेदाध्ययनस्येव प्रकृतेऽपि हेतुमत्या ब्रह्मजिज्ञासया तदुपस्थापनान्न दोष इत्यर्थः । कात्यायनोक्तं तादर्थ्यसमासस्य प्रकृतिविकृतिनियममुपपादयति— **पाणिनिः किलेति** । सूत्रे चतुर्थीशब्दस्य चतुर्थ्यन्तशब्दपरतया तदर्थेसत तच्छब्देन चतुर्थ्यन्तशब्दस्य परामर्शे सति चतुर्थ्यन्तं चतुर्थ्यन्तवाचकेन समस्यत इति सूत्रार्थः स्यात्; अत आह— **चतुर्थ्यन्तशब्दार्थ इति** । योग्यत्वादित्यर्थः । तस्मा इदमिति । ततश्च चतुर्थ्यन्तः शब्दस्तदर्थहेतुभूतार्थवाचकेन समस्यत इति सूत्रार्थ इति भावः । अर्थशब्दादिनापीति । अर्थबलिहितसुखरक्षितशब्दैरपि चतुर्थ्यन्तः

१५१ १५२ १५३ १५४ १५५ १५६ १५७

शब्दः समस्यते ब्राह्मणार्थं पयः कुबेरबलिः गोहितं गोसुखम् अश्वसुखं अश्वरक्षितमित्यपि द्रष्टव्य- मित्यर्थः । **सर्वप्रसङ्ग इति** । रन्धनाय स्थालीत्यादावपि तादर्थ्याविशेषात्समासप्रसङ्ग इत्यर्थः । 'विकृतिः प्रकृत्येति चेत्' इति वार्तिकमर्थतः पठति— प्रकृतिविकृत्योरिति चेदिति । **एवं चार्थादिति**। अस्यैव सिद्धान्तवार्तिकत्वादिति भावः। ननु कात्यायनमतेन चतुर्थीसमा- सासंभवेऽपि पाणिनिमतेन संभवत्येव, तेन तादर्थ्यमात्रे समासानुशासनात्, अन्यथा अश्वाय घासोऽश्वघास इत्यादिसमासासिद्धिप्रसङ्गात्; अत एव पूर्वतन्त्रे धर्माय जिज्ञासेति चतुर्थीसमासः समाश्रित इति शङ्कते— **नन्विति** । पाणिनेरपि प्रकृतिविकारभावस्थल एव तादर्थ्यसमासोऽभिमतः, अन्यथा तस्मिन्सूत्रे बलिरक्षितग्रहणवैयर्थ्यात् कुबेराय बलि- रित्यादावपि तादर्थ्यमात्रस्य सत्त्वात्; एवं सूत्राभिप्रायं वर्णयता भाष्यकारेणाश्वघासादीनां षष्ठीसमासत्वाश्रयणात् अत एव पूर्वतन्त्रेऽपि भट्टपादैर्धर्माय जिज्ञासेति शबरस्वामिवचनं षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरम्, न तु विग्रहप्रदर्शनपरम्, तस्य ज्ञातुमिच्छेति निगमनवाक्ये षष्ठीसमासविभावनादिति व्याख्यातमित्यभिप्रेत्य परिहरति— **कात्यायनेनैव त्विति** । कात्यायनकृतसूत्रव्याख्याननिराकरणेन स्वयमेव सूत्रव्याख्यानाद्भाष्यकार एव कात्यायनस्थानापत्त्या कात्यायनग्रहणेन गृहीतः । एतदर्थसूचनार्थमेव भाष्यकारेणेति वक्तव्ये कात्यायनेनैवेत्युक्तमिति ध्येयम् । **उपसंख्यातमिति**। 'षष्ठी' इति सूत्रविहितं समासान्तरम- १५८ ङ्गीकृतमित्यर्थः । प्रतिपत्त्यनुबन्ध इति टीकापदं व्याचष्टे— **प्रतिपत्ताविति** । जिज्ञासा प्रथमं कर्मैवापेक्षत इत्यत्र कथं प्रतिपत्त्यनुबन्धत्वं हेतुरित्यतस्तदुपपादयति— **स्वरूपेणेति** । स्वरू- पसिद्ध्यनन्तरभावित्वादन्यापेक्षाया इति भावः । जिज्ञास्यान्तरं दर्शयन्भाष्यगतानिर्दिष्टपदसू- १५९ चितं परिहारं च प्रकटीकुर्वन्नाह— **नन्वित्यादिना** । निगूढाभिप्रायत्वे हेतुमाह— **ननु श्रुतेति** । ननु स्वरूपनिरूपणानन्तरभावित्वात्संबन्ध्यपेक्षायाः कथं ब्रह्मसंबन्धिनी जिज्ञासेति प्रथमं संबन्धः? असंबन्धे वा कथं संबन्धसामान्यस्य विशेषपर्यवसानमिति शङ्कते— **नन्विति** । कर्माकाङ्क्षिण्या अपि जिज्ञासाया आद्दत्य कर्मत्वेन प्रतीयमानसंबन्धालाभे संबन्धित्वेन प्रतीयमान- संबन्धोऽप्यविरुद्धः तस्य कर्मत्वेनान्वयायोग्यत्वानिश्चयादिति परिहरति— **नेत्याहेति** । मुख्य- वदातमिति काका लब्धमर्थमाह— **व्याहतमित्यर्थ इति** । ननु कथं कर्मत्वस्य वाच्यत्वम् 'षष्ठी शेषे' इति सूत्रेण संबन्धमात्रे षष्ठीस्मरणात् 'कर्तृकर्मणोः कृति' इति सूत्रविहितषष्ठ्याश्च समा- सप्रतिषेधादित्यत आह— **कर्तृकर्मणोरिति** । अकारप्रत्ययान्तत्वादिति । 'अ प्रत्ययात्' इति पाणिनिसूत्रम् । तत्र अ इति लुप्तविभक्तिकं पदम् । प्रत्ययान्ताद्धातोरकारप्रत्ययो भवतीति सूत्रार्थः । ततश्च प्रकृते सन्प्रत्ययान्ताज्जिज्ञासधातोरुक्तसूत्रादकारप्रत्यये सति तस्य कृत्संज्ञ- कत्वात्कृद्योग इत्यर्थः । ननु कृद्योगलक्षणा षष्ठी समस्यत इति समासाभ्यनुज्ञानेन प्रति- पदविधाना षष्ठी न समस्यत इति निषेधाप्राप्तावपि 'कर्मणि च' इति सूत्रेण समासनिषेधः प्राप्नोत्येव; तथा च शेषषष्ठ्येव युक्तेत्यत आह— **यस्त्विति** । ननु प्रकृतेऽपि साधन- चतुष्टयसंपन्नः कर्ता विद्यते, अत इहाप्युभयप्राप्तिरस्तीति तेनैव सूत्रेण षष्ठी स्यात्, ततश्च समासो न स्यादित्याशङ्क्य यत्र कर्तुरतिशयद्योतनार्थतया प्रयोगस्तत्रैव 'उभयप्राप्तौ कर्मणि' १६१ इति सूत्रप्रवृत्तिः, न त्वप्रयोगस्थलेऽपीत्याशयेनाह— **यथेति** । प्रतियोगित्वाख्यात-

मिति । चरमत्वास्फुटत्वपरतयेति शेषः, अन्यथा प्राथम्यपरोक्षत्वयोरविरोधात्कर्मत्वसंबन्धमात्रत्वयोरत्यन्तवैषम्यं न प्रतिपादितं स्यादिति भावः । ननु प्राथम्यचारम्याभ्यामेव परिग्रहपरित्यागयोः सिद्धेः स्फुटत्वास्फुटत्वाभिधानं व्यर्थमित्यत आह— **परमत इति** । लाक्षणिकत्वमस्फुटत्वम् । इदमुपलक्षणम्; स्फुटत्वं श्रौतत्वं प्रथमान्वयप्रसञ्जनार्थमित्यपि द्रष्टव्यम् । १६२
**सौत्रेति** । सूत्रकारोपदेशबलादिति भावः । सूत्रकारस्य परमाप्तत्वेऽपि न तत्र विश्वासः १६३ न्यायसूत्रत्वादित्याशयेन परिहरति— **नेति** । **व्यधिकरणत्वादिति** । फलविषयत्वस्य तदुपायाविषयत्व एव हेतुत्वादित्यर्थः । उक्तहेतोः फलपर्यन्तोपायविषयकत्वसाधकत्वान्न दोषः इति परिहरति— **तत्राहेति** । एवमपि कथं फलेच्छाया उपायांशविषयकत्वम्, अन्यविषयाया अन्यविषयत्वायोगादित्यत आह— **फलेच्छाया इति** । उपायेच्छायाः फलेच्छाजन्यत्वादौपचारिकं फलेच्छात्वमिति भावः । ननु टीकायां भवतु ब्रह्मविषया अवगतिरित्यत्र स्वरूपसाक्षात्कार एवावगतिरुक्ता वृत्तेरपुरुषार्थत्वात्, अतः कथं तस्या ब्रह्मविषयत्वोक्तिरित्यत आह— **स्वरूपावगतिरिति** । स्वरूपावगतेः सुखरूपत्वात्कथमिष्टेति टीकाया अयोगमाशङ्क्य १६४ ब्रह्म न सुखमजिज्ञास्यत्वाद्धर्मवदिति शङ्काभिप्रायमाह— **ब्रह्मणोऽपीति** । श्रुत्यनुभवबाधितमनुमानमित्याह— **श्रुतीति** । प्रतिभानिति शत्रन्तः शब्द इति दर्शयति— **प्रतिभासमान इति** । **प्राप्यमाणत्वादिति** । तथा च पुरुषेण श्रवणादिव्यापारेण कण्ठचामीकरन्यायेन प्राप्यमाणत्वाद्ब्रह्मणोऽपि पुरुषार्थत्वमिति भावः । ननु टीकायां न च तदुच्छेदमन्तरेणेत्यादिना अविद्यानिवृत्त्यानन्तर्यं साक्षात्कारस्योक्तं तदयुक्तम्, साक्षात्कारजन्यत्वादविद्योच्छेदस्येत्यत आह— **विगलितदुःखेति** । **वृत्तिव्यक्तेति** । ततश्च जीवस्य यथोक्तब्रह्मात्मत्वेन साक्षात्कारे आविर्भावो व्यक्तता न तदुच्छेदमन्तरेणेति टीकार्थो बोध्यः ।
**सूत्रस्यानुवादत्वेति** । सूत्रार्थकथनपरे वाक्ये तव्यप्रत्ययाध्याहारेण सूत्रे कर्तव्येति पदाध्याहारसूचनादिति भावः । **किं तत्कर्तव्यतेति** । इच्छायाः कृत्ययोग्यत्वादिति भावः । १६५ ननु टीकायामिच्छासुखेन ब्रह्ममीमांसायां प्रवर्तत इत्यनेन विचारगतं कर्तव्यत्वं तन्मुखभूतायामिच्छायामुपचर्यत इत्युक्तम्, तत्र कथमिच्छाया विचारमुखत्वमित्यतस्तदुपपादयति— **ज्ञातुमिच्छा हीति** । ननु सूत्रे जिज्ञासापदस्य विचारार्थकत्वाङ्गीकारसंभवात्कर्तव्येति पदस्य किमित्यार्थिकविचारकर्तव्यतापरत्वाश्रयणमित्यत आह— **आर्थिके चेति** ।
**इत्युपपादनेनेति** । ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यव्याख्यानावसर इत्यर्थः ।
**तद्विचारप्रतिज्ञापीति** । 'अथातो धर्मजिज्ञासा' इत्यस्य वेदाध्ययनानन्तरं वेदस्य विवक्षितार्थत्वाद्वेदार्थविचारः कर्तव्य इत्यर्थः । तत्र सिद्धवदेतदुपदेशेन वेदार्थो विवक्षित इति वेदार्थविचारः कर्तव्य इति च द्वे प्रतिज्ञे दृश्येते । तत्र द्वयोरपि प्रतिज्ञयोः सामान्यतो वेदार्थमात्रविषयकत्वेऽपि यथा अर्थविवक्षाप्रतिज्ञाया विशिष्य ब्रह्मकाण्डसाधारण्यमाश्रीयते तथा विचारप्रतिज्ञाया अपि विशिष्य ब्रह्मविचारपरत्वं कुतो नाश्रीयत इत्यर्थः । अनन्तरकृतयावद्विशेषपरत्वात्सामान्यशब्दस्य ब्रह्मविचारस्य च षोडशलक्षण्यां पूर्वमीमांसायामकृतत्वान्न तत्परत्वमिति परिहरति— **उपरीति** । प्रसिद्धमप्रसिद्धं वेति भाष्यस्य वेदान्तेभ्यः प्रसिद्धमप्रसिद्धं वेत्येवं विशेषपरत्वेन व्याख्याने हेतुमाह— **युष्मदस्मदिति** । १६६

आचिक्षिपे आक्षिप्तः । संमुग्धप्रसिद्धस्य संमुग्धं यथा तथा प्रसिद्धस्य आपाततो ज्ञातस्येत्यर्थः ।
१६७ टीकायाम्— साधनन्यायेति । स्वाधेयविशेषयुक्ततया विषयं साधयत एव साधनत्वमिति न्यायातिपातादित्यर्थः । वेदान्तानां निश्चायकत्वात्कथमापातज्ञानजनकत्वमित्याशङ्क्य ज्ञानस्य न संदेहरूपत्वमापातत्वम्, किं तु अप्रामाण्यशङ्काकलङ्कितत्वमित्याशयेनाह— **यद्यपीत्यादिना । सामान्यतो दृष्टेति ।** वेदे तत्र तत्र विभक्तिव्यत्ययदर्शनाद्विभक्तीनां लुग्दर्शनाच्च 'तत्त्वमसि' इत्यादौ तस्मात्त्वं जात इति वा तस्य त्वमिति वा 'त्वं ब्राह्मणोऽसि' इत्यादिवत्त्वं तदसीति शरीरशरीरिभावेन सामानाधिकरण्यं वा वाक्यार्थः स्यादिति सामान्यतो दृष्टनिबन्धनवचनव्यक्त्याभासप्रतिबद्धो वेदः, तज्जनिते निश्चयेऽप्रामाण्यशङ्कया फलतः
१६८ संदिग्धार्थः स्यादित्यर्थः । **उद्धरतीति ।** प्रसिद्धिपक्षावलम्बनादिति भावः । **कथं प्रतीतिपरत्वव्याख्येति ।** अवगमस्तावदस्तीति टीकायाः तथा व्याख्यानादिति भावः । टीकायां ततस्तु प्राग्देहाद्यभेदेनेति न भ्रमपरिकल्पिताभेदाभिप्रायम्, तस्य सिद्धान्त्यभिमतत्वेन निराकार्यत्वायोगात्, ततश्च संसारदशायां देहाद्यभेदादशुद्धत्वं मुक्तौ शुद्धत्वं च न भेदवा-
१६९ दिमते नापि चार्वाकमते तैस्तथानभ्युपगमादित्यत आह— **भेदाभेदमतेन शङ्केति ।** अनौपाधिकब्रह्मप्रसिद्धिकथनेन शङ्कापरिहारस्य जातत्वात्सोपाधिकब्रह्मप्रसिद्धिकथनं वृथेत्याशङ्क्य तत्त्वमसिवाक्यार्थज्ञानोपयोगितत्पदलक्ष्यस्वरूपनिर्णयाय तत्कथनमित्याशयेनाह— **तत्त्वमसिवाक्येति । अविद्याविषयीकृतमिति ।** जीवस्यैव तदाश्रयत्वादिति भावः । शक्तिज्ञानाभ्यां कारणत्वलक्षणे शक्यसंबन्धं साहचर्यं दर्शयति— **यो हीति ।** न केवलमित्युत्तरटीकानुरोधेनावतारयति— **सदेवेत्यादिवाक्यादिति । वाक्यात्प्रसिद्धस्यैवेति ।** अस्ति तावदित्यादिभाष्यबलादेव वाक्यप्रमाणकत्वसिद्धेरिति भावः । टीकायाम्— स्वहस्तयतीति । स्वहस्तवन्तं करोति, स्वहस्तगतं करोतीति यावत् । टीकायाम्— वृद्धिकर्मा हि बृहतिरिति । वृद्धिः कर्म क्रिया वाच्या यस्येत्यर्थः । बृंहतिरिति वक्तव्ये आगमानुशासनमनित्यमिति मत्वा नुमागमो न कृतः । ननु ब्रह्मपदादनवच्छिन्नमहत्त्वावगतावपि कथं नित्यत्वादिसिद्धिरित्याशङ्क्य निरवधिकमहत्त्वस्य देशतः कालतो वस्त्वन्तराच्चेति त्रिविधपरिच्छेदराहित्यरूपत्वादनित्यादिरूपत्वे च तदसिद्धेर्ब्रह्मपदबलादनित्यादिप्रतियोगिरूपासिद्धिरवि-
१७० कलैवेत्याह— **उक्तविशेषणानामिति ।** पदयोः सामानाधिकरण्ये हेतुमाह— **जीवस्य हीति ।** ब्रह्माभिन्नस्यैव सतो जीवस्य भ्रान्तिपरिकल्पिताशुद्धत्वादिव्युदासेन शुद्धबुद्धादिस्वरूपसमर्पणे ब्रह्मभावस्याप्युक्तसिद्धत्वाद्ब्रह्मरूपं जीवात्पदार्थान्तरं सन्न पृथक्समर्पणीयमित्यर्थः । सर्वस्यात्मत्वादिति भाष्यगतस्य सर्वस्येति पदस्य व्यवहितान्वयेन व्याख्याने बीजमाह— **प्रसिद्धिर्हीति ।** ननु ज्ञानस्य ज्ञात्राकाङ्क्षावद्धर्मस्याप्यस्ति धर्म्याकांक्षा संनिधिस्त्वधिक इत्याशङ्क्य प्रयोजनाभावाच्च तदन्वय इत्याह— **तथा सतीत्यादिना । पांसुमन्ताविति ।** तथा च मत्वर्थीयो लच्प्रत्यय इति भावः । **हालिक इति ।** तद्वहतीत्यर्थे ठक्प्रत्यय इति भावः । **साध्यहेत्वोरिति ।** आत्मत्वहेतोरप्रयोजकत्वाशङ्कायां तद्धेतुत्वसमर्थनार्थत्वात्सर्वो हीति भाष्यस्येत्यर्थः । पूर्वभाष्योक्तहेतुसाध्योभयस्फुटीकरणार्थत्वादस्य भाष्यस्य न दोष इति परिहरति— **आशङ्क्याहेति । अस्तित्वं न सिध्येदिति ।** अहंपदार्थेऽस्तित्व-

स्वाविपर्ययाकरणादिति भावः । नन्वहमस्मीति ज्ञानमेवात्मज्ञानमिति कथं मा न ज्ञासीदात्मानमिति टीकेत्यतः शङ्काभिप्रायमाह— अहमिति प्रतीतेरिति । नाहमस्मीति प्रतीयादिति भाष्ये नञः प्रतीयादित्यनेन व्यवहितेनान्वये हेतुमाह— ऋजुयोजनायामिति । सुषुप्ताविति । प्रसिद्ध्यभावस्य व्याप्यस्य सत्त्वादिति भावः । शङ्कितुराशयमिति । अहमिति १७१ प्रतीतेरहंकारमात्रविषयत्वान्नात्मप्रतीतिः सिध्येदित्येवंरूपमित्यर्थः । समर्थितमिति । अहंकारास्पदे कर्तृत्वचैतन्यादिचिदचिद्धर्मदर्शनादिति भावः । आत्मप्रसिद्ध्यभावे आत्मप्रसिद्ध्यनङ्गीकारे अहमिति चिदचिदुभयोल्लेखिनी प्रतीतिर्न स्यादित्यर्थः । ननु ब्रह्मणि वाक्यार्थे किमायातमिति शङ्कायास्तत्पदस्य त्वंपदेन सामानाधिकरण्यादित्यनेन कथं परिहार इत्यतस्तत्पदस्य ब्रह्मपरत्वादित्याशयमाह— तत्त्वमसिवाक्य इति । ननु ब्रह्मात्मैक्यस्येति । ब्रह्मपदार्थाप्रसिद्ध्या जिज्ञासाक्षेपस्य ब्रह्मप्रसिद्धिकथनेन परिहृतत्वान्ननु प्रत्येत्विति टीकायां ब्रह्मणि किमायातमित्याक्षेपो ब्रह्मणि वाक्यप्रतिपाद्ये किमायातमित्येवं जीवब्रह्माभेदस्य वाक्यार्थस्याप्रसिद्धत्वेन प्रतिपाद्यत्वाक्षेप एवायमिति भावः । पदद्वयसमभिव्याहारादिति । ताभ्यां जीवब्रह्मभ्यां गृहीतसंबन्धं यत्पदद्वयं तदिति त्वमिति च तयोः समभिव्याहाराल्लक्षणया ब्रह्मात्मैक्यलक्षणोऽपूर्वो वाक्यार्थः सुज्ञान इति भावः । तत्त्वमसिवाक्यस्य ब्रह्मात्मैक्यबोधकत्वसमर्थनं संबन्धानुबन्धकथनायेति दर्शयन्पुनराक्षेपस्य प्रयोजनमाह— एवं तावदिति । असाधारण्यरूपेति । एतच्छास्त्रैकप्रतिपाद्यस्वरूपेत्यर्थः । लोकप्रसिद्धीति । पण्डितपामरसाधारणपुरुषमात्रप्रसिद्ध्यभावादित्यर्थः । इत्थंभावार्थत्वमिति । तत्त्वमसीति वाक्याद्यदि ब्रह्मात्मत्वेन प्रसिद्धमस्तीति टीकायां तृतीयाया इत्थंभावार्थकत्वकथनादिति भावः । हेतुतृतीयाव्याख्याने को लाभ इत्यत आह— तदा हीति । तत्पदार्थमात्रस्येति । धर्मिण इति शेषः । शुद्धत्वादेरप्रसिद्धत्वेनानुवादायोगादिति ध्येयम् । अभेदविवक्षयाप्युद्देश्योपादेयभावव्यत्यासे किं प्रयोजनमित्यतस्तद्दर्शयति— अन्यत्र हीति । १७२ उद्दिश्य विधानस्थल इति शेषः । वस्तुस्वभावसाधिकेति । परस्परविषयापहारकत्वेनैव प्रतिपत्तीनां विरुद्धत्वादिति भावः । अप्रामाण्यशङ्काशून्यप्रतिपत्तेरेव स्वविषयनिश्चायकतया प्रकृते न कापि प्रतिपत्तिर्निश्चायिकेति तद्बलादुपपन्नः संशय इति तात्पर्यमाह— न विरुद्धेति । साधारणाकारदृष्टाविति । साधारणधर्मिदृष्टावित्यर्थः । नन्विहेति वाक्येऽपि धर्मपदं धर्मिपरम् ; विप्रतिपत्तिजन्यसंशये साधारणधर्मदर्शनस्यानपेक्षितत्वात्केन रूपेण स धर्मी सिद्ध इत्याशङ्क्याहंकारास्पदत्वेनेत्याह— देह आत्मेत्यादीति । विप्रतिपत्तीनां भिन्नपुरुषाश्रयत्वात्कथमाश्रया न स्युरिति कथमित्यत आह— आश्रयशब्द इति । धर्मिणः सर्वतन्त्रसिद्धत्वस्फोरणाय फलितमर्थं दर्शयति— अतो विवदमानानामिति । धर्मिमात्रस्य सिद्धत्वेऽपि शास्त्रप्रतिपाद्यस्य ब्रह्मात्मैक्यस्यासिद्धत्वात्कथं जिज्ञासेति शङ्कते— साधारणधर्मीति । न हीति । साधारणो १७३ धर्मी सर्वसंप्रतिपन्नत्वान्न शास्त्रप्रतिपाद्य इत्यर्थः । शास्त्रप्रतिपाद्यमप्यापाततः सिद्धमिति परिहरति— तत्राहेति । एवमपि ब्रह्मात्मैक्यस्य कथं प्रसिद्धिः लौकिकतत्पदनवगमात् वेदान्तानां तद्बोधकत्वस्य परैरनभ्युपगमादित्याशङ्क्य वेदान्तानां ब्रह्मात्मैक्यपरत्वं निषेधद्भिः परैरपि निषेधप्रतियोगितया ब्रह्मात्मैक्यमङ्गीकृतमिति तदपि प्रसिद्धमेवेति तात्पर्यमाह— यस्मादित्यादिना ।

**लौकायतिकादीनामिति**। लौकायतिकानां देहातिरिक्तात्मप्रतीतिर्भ्रमः। आस्तिकानामपि निरीश्वरभेदवादिनां तत्पदार्थप्रतीतिर्गौणी; सेश्वरभेदवादिनां तु तत्त्वंपदार्थैक्यप्रतीतिर्गौणी। आस्तिकशिरोमणीनामद्वैतिनां तु त्वंपदार्थधीरसङ्गसाक्ष्यालम्बना, तथा च तत्प्रतीतिभ्रमत्वगौणत्वादौ वादिनां विप्रतिपत्तिरित्यर्थः। चैतन्येत्यनेनापि पक्षान्तरं निर्दिश्यत इति भ्रान्तिं वारयितुं

१७४ षष्ठीतत्पुरुषमाह— **देहादीति**। ननु चैतन्यं चेतनत्वं ज्ञानम्, तच्च क्षणिकविज्ञानपक्षे न संभवति क्षणिकविज्ञाने ज्ञानान्तराङ्गीकारात्, अत आह— **आत्मत्वमित्यर्थ इति**। टीकायाम्— योग्यताविरहादिति। अनित्याशुद्धजडादिरूपस्य देहादेर्नित्यत्वशुद्धत्वचिद्रूपत्वाद्यन्वयायोग्यत्वादित्यर्थः। **किं विक्रियेति**। परिणामविशेष इत्यर्थः। चैतन्यरूपभोगाभ्युपगमादाह— **सक्रियत्वरूपेति**। टीकायाम् तत्पदार्थासंगतिस्तत्पदार्थैक्याभाव इत्याह— **अतो न नित्येति**। तत्पदार्थे विप्रतिपत्तिर्दर्शितेत्येतद्ब्रह्मात्मैक्यविप्रतिपत्तेरप्युपलक्षणमित्याह— **लौकायतिकादीति**। ब्रह्मणो जीवात्मव्यतिरेकः सिद्धान्तविरुद्ध इत्यत आह— **कर्तृ-**

१७५ **भोक्तृभ्य इति**। नैयायिकाभिमतकर्तृभोक्तृरूपेभ्यः सांख्याभिमतकेवलभोक्तृरूपेभ्यश्च जीवात्मभ्यो व्यतिरेक उच्यत इति न सिद्धान्तविरोध इति भावः। टीकायाम्— सर्वस्य जगत ईष्ट इति। नियमनादिसमर्थ इत्यर्थः। सिद्धान्ते सर्वज्ञत्वादेरतात्त्विकत्वादाह— **नैयायिकेति**। टीकायाम्— तत्पदार्थं आत्मेति। स्वरूपमित्यर्थः। पक्षान्तराणामपि युक्तिवाक्यमूलकत्वे कथं तेषामप्रामाणिकत्वमित्यत आह— **आत्मा स भोक्तुरिति पक्ष इति**। अनर्थं वेयादिति भाष्ये वाशब्दश्चार्थ इति व्याचष्ट इत्याशयेनाह— **अनर्थं चेयादिति भाष्यार्थमाहेति**। अनिष्टप्रसञ्जनात्मकत्वाभावाद्वेदान्तमीमांसायाः कथं तर्कत्वमित्यत आह— **अर्थापत्तिरिति**। **वेदप्रामाण्येति**। श्रुतिलिङ्गादीनां श्रुत्यर्थादीनां वचननामधेयचोदकानां च शेषशेषिभावक्रमधर्मातिदेशबोधनमुखेन तत्तद्वेदवाक्यप्रामाण्यसमर्थनार्थत्वात्तत्परिशोधकत्वमिति भावः। ननु पूर्वमीमांसागतानां तर्काणां वेदान्तप्रामाण्ये तद्बोधितपदार्थानामङ्गाङ्गिभावादौ च भवतु वेदान्तमीमांसाया अपेक्षा, न्यायशास्त्रविचारितप्रत्यक्षादिप्रमाणप्रमेयलक्ष-

१७६ णानां कथमपेक्षेत्यत आह— **स्मृत्यादिभिश्चेति**। स्मरन्ति च बर्हिस्तूभयथापि स्मृतेः आचाराच्च इत्यादिसूत्रेषु प्रमाणत्वेन निर्दिष्टानां स्मृत्याचाराणां प्रामाण्याय मूलभूतश्रुत्यनुमाने समाननामरूपत्वादित्यादिसूत्रनिर्दिष्टपदपदार्थस्वरूपनिर्णये वेदस्वरूपनिर्णये चोपयोग इत्यर्थः। लक्षणानामतर्कत्वात्कथं तर्कशब्देन ग्रहणमित्याशङ्क्य लाक्षणिकोऽत्र तर्कशब्द इत्याह— **सर्वे चैत इति**॥

**जन्माद्यस्य यतः**॥ ब्रह्म जिज्ञासितव्यमित्यादिना भाष्यकारेणैव सूत्रावतारणात्स्वयं तदवतारणं व्यर्थमित्याशङ्क्य प्रथमसूत्रेण कृत्स्नस्यापि शास्त्रस्य संगतिप्रदर्शनपरा टीकेत्याह— **अनन्तरेति**। तर्हि कथं जन्मादिसूत्रस्यैव ग्रहणमित्यत आह— **सकलशास्त्रमिति**। अनया टीकया कः संबन्धो दर्शित इत्यत आह— **विषयादीति**। आदिपदेन प्रयोजनाधिकारिसंबन्धा गृह्यन्ते। किं लक्षणमिति भाष्ये किंशब्द आक्षेपार्थक इति टीकाभिप्रायमाविष्करोति— **प्रथमसूत्रेणेति**। टीकायां प्रधानप्रतिज्ञया तदुपयोगीन्यपि प्रमाणादीनि प्रतिज्ञातानीत्युक्तम्; तदुपपादयति— **मुमुक्षुणेति**। **अर्थादिति**। प्रमाणादिविचारमन्त-

रेण स्वरूपविचारस्य पर्यवसानाभावादिति भावः । कथमिति । 'मानाधीना मेयसिद्धिः' इति न्यायेन प्रमाणस्य प्राधान्यात्तदेव प्रथमं विचार्यमिति भावः । लक्षणेन विविक्तत्वेन ज्ञाते प्रमेये किमत्र प्रमाणमिति तत्सत्तानिश्चयाय प्रमाणापेक्षा; तथा च लक्षणेन स्वरूपमेव प्रथमं प्रतिपाद्यमिति परिहरति— **अत आहेति** । टीकासूचितौ विषयविशयावधिकरणाङ्गभूतौ दर्शयति— **यतो वा इत्यादीति** । यतो वा इत्यादिवाक्यं जगता तटस्थलक्षणेन नित्यानन्दादिना स्वरूपलक्षणेन च ब्रह्म लक्षयति उत नेत्यर्थः, इतरव्यावृत्तस्वरूपविशेषज्ञानाय शाखाग्रं चन्द्रः प्रकृष्टप्रकाशश्चन्द्र इतिवल्लक्षणद्वयस्याप्यावश्यिकत्वात् । अत एव यतो वा इत्यादिवाक्यस्य स्वरूपलक्षणज्ञापनसामर्थ्यस्फोरणाय भाष्यकारेण तस्य च निर्णयवाक्यमानन्दाद्ध्येवेति जगत्कारणस्यानन्दरूपताबोधकवाक्यसापेक्षत्वमुक्तम् । संशये बीजमाह— **लक्षणस्येति** । तद्धर्मत्वेन तत्तादात्म्येन वा प्रसिद्धं हि लोके इतरव्यावृत्तिबुद्धिजनकतया तस्य लक्षणं भवति, जगच्च न तथा, अशुद्धादिरूपस्य तस्य तद्विरुद्धब्रह्मतादात्म्यतद्धर्मत्वयोरयोगात् नित्यानन्दादेः स्वरूपेणाप्यप्रसिद्धत्वात्; तथा च जगतो लक्षणस्य लक्ष्यव्यावर्तकतावच्छेदकरूपेण प्रसिद्ध्यप्रसिद्धिभ्यां नित्यानन्दादेश्च स्वरूपेणापि प्रसिद्ध्यप्रसिद्धिभ्यां संशय इत्यर्थः । अधिकरणाङ्गं प्रयोजनमाह— **पूर्वाधिकरणेति** । **आक्षेपे चेति** । आक्षेपाधिकरणस्याक्षेप्याधिकरणसिद्धान्तफलेनापवादाधिकरणस्यापवाद्याधिकरणपूर्वपक्षफलेन तदर्थचिन्तायाश्च यदर्था सा तत्फलेन च फलवत्त्वाल्लक्षणस्य न लक्ष्यपरिच्छेदव्यतिरिक्तफलाभावात्कृत्वाचिन्ताया अन्यत्रैव फलनिश्चयेन प्रकृते फलाभावनिश्चयाच्चेत्यर्थः । ननु शाखाग्रे चन्द्र इत्यादौ प्रकाशविरुद्धेनापि शाखाग्रेण चन्द्रस्येव विरुद्धेनापि जगता ब्रह्म लक्ष्यताम्, तथा च कथं टीकेयत आह— **सजातीयेति** । व्यावर्तकतावच्छेदकरूपेण ज्ञातस्यैव लक्षणत्वम्; शाखाग्रं च न चन्द्रस्य लक्षणमिति भावः । तादात्म्येन तद्धर्मत्वेन वा प्रसिद्धस्यैव लक्षणत्वमिति नायमस्ति नियमः, सामीप्यादिसंबन्धेन शाखाग्रादेरपि चन्द्रादिलक्षकत्वेन जगतोऽपि ब्रह्मजन्यतया तल्लक्षणकत्वसंभवात्, इतरव्यावृत्तेरप्यर्थापत्तिविधया तेनैव ज्ञापनात् । यदि च व्यावृत्त्यनुमाने हेतोः पक्षवृत्तित्वेन भवितव्यमित्याग्रहः तदानीमपि न दोष इत्याशयेनाह— **न जगदिति** । उक्तमर्थं टीकारूढं करोति— **तदुत्पन्नत्वेनेति** । **लक्षणमिति** । व्यावृत्तिबुद्धिजनकमित्यर्थः । अत्र भाष्यकृता जन्मादिपदं समाहारान्यपदार्थकत्वेन तद्गुणसंविज्ञानबहुव्रीहिरिति व्याख्यातम्; तद्युक्तम्, समाहारद्वारा समाह्रियमाणप्रतीतौ मतिक्लेशात् श्रुतौ जन्मादीनामेव निर्दिष्टत्वाच्च । अथ जन्मादीति मूलपदानुरोधादेवं व्याख्यानं सूत्रकारो वा किमित्येवं निरदिक्षदिति तत्रापि पर्यनुयोगात् तथा स्थितिभङ्गरूपान्यपदार्थमात्रेणैव ब्रह्मलक्षणसंभवे समस्यमानपदार्थस्याप्यन्यपदार्थगर्भप्रवेशे नास्ति कारणमित्याशङ्कानिराकरणार्थं लाघवेत्यादिटीका । तत्र समाह्रियमाणप्राधान्यविवक्षायां सूत्रे जन्माद्योऽस्य यत इत्यक्षराधिक्येन गौरवापत्तेः समुदायसमुदायिनोरनतिभेदेन श्रुतिविरोधाभावाच्च सूत्रकृता तथा निर्देशः कृत इति टीकाभिप्रायमाविष्करोति— **जन्म आदिर्ययोरिति** । **विशेषरूपेणेति** । स्थितित्वभङ्गत्वरूपपदार्थतावच्छेदकरूपेणेत्यर्थः । **सामान्यविवक्षयेति** । समाहारप्राधान्ये समाह्रियमाणानां पदार्थताव-

१७७ १७८ १७९ १८०

च्छेदकरूपतिरोधानेन तद्गतसामान्यरूपस्यैकस्यैव विवक्षितत्वादिति भावः । अनेन च विशेषणेन नपुंसकलिङ्गत्वेऽपीतरेतरयोगद्वन्द्वे जन्मादीन्यस्येति सूत्रगौरवं स्यादिति स्फोरयितुं टीकायां नपुंसकग्रहणं तदेकवचनपरमपीति सूचितम् । एवमपि स्थितिभङ्गयोरेव समाहारो विवक्ष्यताम्, तदानीमपि सूत्रसामञ्जस्याविरोधादित्याशङ्कां निराकर्तुं तदुपपादनायेति टीका । तया कथमुक्तशङ्कापरिहार इत्यतस्तात्पर्यमाह— **तत्रेति** । तत्र सूत्रे योऽयं नपुंसकैकवचनप्रयोगस्तदर्थमित्यर्थः । अनेन तदुपपादनायेति टीकायां तच्छब्दस्य सूत्रकृत्कृतनपुंसकैकवचनप्रयोगपरतया तदुपपादनाय योग्यं समाहारमाहेति टीका व्याख्याता । तथा च श्रुत्यर्थग्रन्थनार्थत्वात्सूत्रस्य श्रुतौ च जन्मादीनां त्रयाणामपि निर्दिष्टत्वात्तदानुगुण्याय सूत्रे तद्गुणसंविज्ञानसमाश्रयणमिति भावः । **सर्वस्य विशेषणत्व इति** । अन्यपदार्थस्य सामस्त्येनैव विशेषणत्वे विवक्षिते समस्यमानपदार्थादन्यपदार्थस्य भेदाभावेन समासायोगादित्यर्थः । जन्मनश्चादित्वमित्यादिभाष्यं व्याचष्टे— **अनादाविति** । **प्रतीतिमात्रमिति** । 'अस्य महतो भूतस्य' इत्यादिप्रयोगादिति भावः । 'जनिकर्तुः प्रकृतिः' इत्यनेन सूत्रेण जायमानस्य या प्रकृतिः कारणं तद्वाचिनोऽपादानसंज्ञया पञ्चमीविधानेन तादृशस्यैव श्रुतिगतस्य यत इत्यस्य सूत्रे निर्देशारकारणनिर्देश इत्युक्तं भाष्ये । तच्च भाष्यं कारणत्वमेव लक्षणम्, तच्च जीवाविद्याविषयी-

१८१ कृतस्य धर्म इति प्राक्तनग्रन्थेनैवार्थाद्व्याख्यातमित्याह— **व्याख्यातमिति** । **लक्षणातिव्याप्तिरिति** । लक्षणस्य ब्रह्मातीत्य परित्यज्य कालादिषु व्याप्तिः, ब्रह्मण्यसंभव इत्यर्थः । अत एव टीकायां प्रसिद्धेषु कालादिषु सत्त्वप्रसिद्धं ब्रह्म कारणमिति कुतः संभावनेत्युक्तम् । ननु टीकायां क्रियाभावशब्दनिर्दिष्टयोरदृष्टशून्ययोर्मध्ये यदृच्छास्वभावौ निर्दिष्टौ, तयोः को भेद इत्यत आह— **स्वभाव एवेति** । उत्पत्तेः प्रागत्यन्तासत्त्वमसिद्धमिति परि-

१८२ हरति— **अत आहेति** । बुद्धिसिद्धमित्येतद्वाक्यं योजयति— **यदसदिति** । टीकायाम्— ब्रह्म आदित्यादयः । टीकायाम्— सूदाः पाककर्तारः । **इतरथेति** । कर्तुः फलाभावे कष्टात्मके कर्मणि विधिना तस्य प्रेरणानुपपत्तेरित्यर्थः । तथा च न्यायानुगृहीतप्रबलविध्यनुरोधेन यस्मिञ्जात इत्यार्थवादवाक्यं पुत्रे जाते सति य एतामिष्टिं निर्वपति स पूत इत्येवंपरतया नेयमिति भावः । सूत्रं योजयन्सिद्धान्तं दर्शयति— **यस्मि-**

१८३ **ञ्जात इति** । **प्रीत्युत्पत्तेरिति** । पशुहिरण्यादिगतातिशयादिव पुत्रगतातिशयादपि पितुः प्रीत्युत्पत्तेस्तदर्थमेव च प्रेरणासंभवान्न विधिविरोध इति भावः । भाष्यगतविशेषणबलेन टीकानुक्तमपि पक्षद्वयं निराकृतमित्याह— **अत्रानेकेत्यादिना** । टीकायाम्— इतरेतरद्वन्द्व इति । ततः प्रतिनियतपदेन कर्मधारयः, ततश्चाश्रयपदेन षष्ठीतत्पुरुषश्चेत्यभिप्रेत्य तद्दर्शितम् । देशादीनि चेत्यादिटीकायाः शेषमिति वाक्यशेष इत्यन्तं भाष्यं वाक्यशेष इत्यन्तायां टीकायां विशदमित्यर्थः । ननु भाष्यटीकयोः कथं जगत्कारणत्वं ब्रह्मणो लक्षणमुक्तम्, सजातीयविजातीयव्यवच्छेदकस्यैव लक्षणत्वात् ब्रह्मसजातीयस्य कस्यचिदनभ्युपगमाद्ब्रह्मणि जात्यभावेन तद्विलक्षणजातियोगिनो विजातीयस्याप्यभावात् । अत आह— **तदेवमिति** । जगत्प्रकृतित्वं कर्तृप्रधानादेः सकाशाद्ब्रह्म व्यवच्छिनत्तीत्यर्थः । सदृशविसदृशव्यवच्छेदकत्वेनैव लक्षणत्वम्; तच्च पारमार्थिकं भ्रमपरिकल्पितं वेति न कश्चिद्विशेष इत्याशयेनाह—

**परभ्रमपरिकल्पितेति** । ब्रह्मसजातीयत्वं दर्शयितुं जगद्योनीत्युक्तम् । **विजातीयादिति** । ब्रह्मणः कारणत्वादेव हेतोः कार्यत्वाभावात् कार्यरूपात्प्रपञ्चादुक्तविधजगत्प्रकृतित्वं ब्रह्म व्यवच्छिनत्तीत्यर्थः । **त्रीणि लक्षणानीति** । स्वरूपाणीत्यर्थः । **सांख्यप्रक्रियेति** । सेश्वरसांख्यानां योगिनां प्रक्रियेत्यर्थः । ननु धर्मिणो हीति टीकायां धर्मलक्षणः परिणामः कटकमकुटादिरित्युक्त्वा तस्योत्पत्तिरित्युक्तम् तदयुक्तम्, उत्पत्त्युत्पत्तिमतोरभेदायोगादित्यत आह— **तत्र निरूप्यमाण इति** । ततश्च हाटकादेर्धर्मिणो धर्मलक्षणः परिणामः कटकमकुटादिरिति योऽयं सांख्यव्यवहारस्तत्र हाटकादुत्पन्ने कटकादौ प्रयुज्यमानस्य परिणामशब्दस्य वाच्यस्वरूपे विचार्यमाणे आकृत्यधिकरणन्यायेन तस्य तत उत्पत्तिरेव तत्परिणामशब्दालम्बनमिति टीकार्थो बोध्यः । एवं च कटकादिः परिणाम इति प्रयोगो लाक्षणिक इति भावः । **कटकादिकार्यस्येति** । अत्रापि कटकादेर्वर्तमानत्वादिरूपो यो लक्षणपरिणामः सांख्याभिमतस्तत्रापि परिणामशब्दालम्बनमुत्पत्तिरेवेति टीकार्थो बोध्यः । सोऽपीत्यनेन कटकादेरपीत्यपिशब्दस्य लक्षणपरिणामोऽपीत्यन्वयो दर्शितः । नवपुराणत्वादेरवस्थापरिणामस्य स्वरूपं प्रकटयति— **अतीतादेरेवेति** । टीकान्वयः प्राग्वत् । ननु टीकायां तच्च न मूलकारणेत्यादिना नैरुक्तवाक्यस्य मूलकारणब्रह्मप्रतिपादकत्वं प्रतिषिध्यते, तत्र को हेतुरित्याशङ्क्य पौरुषेयं वाक्यं मूलप्रमाणसापेक्षं सदेव प्रमापकम्, प्रकृते च न 'यतो वै' इत्यादिश्रुतिर्मूलम्, तस्या उत्पत्त्यादिविकारत्रयमात्रपरत्वात्, नापि प्रत्यक्षम्, महाभूतेषु ब्रह्मजन्यत्वस्य चक्षुराद्ययोग्यत्वादित्याह— **पुरुषाणामिति** । तर्हि स्मृत्यधिकरणन्यायेन तन्मूलश्रुत्यनुमानमस्त्वित्याशङ्क्य निराकरोति— **न चेति** । **अन्यथाप्युपपत्तेरिति** । ततश्च यास्कादीनां वृक्षादिगतषड्भावविकारप्रत्यक्षस्यैव मूलत्वसंभवान्न मूलान्तरानुसंधानं कल्पयितुं शक्यम्, हेतुदर्शनाच्च इति न्यायविरोधादिति भावः । तन्मा शङ्कीत्यादि भाष्ये योत्पत्तिरित्यादिनोत्पत्त्यादीनां प्रसिद्धिरुक्ता, तां प्रकटयति— **परमकारणादिति** । न जगत उत्पत्त्यादयो वक्तव्या इत्यभिप्रेत्य ते सूत्रेणोच्यन्ते येनोत्पत्तिमात्रे निर्दिष्टे उत्पन्नस्य स्थितिभङ्गावश्यंभावेन नान्तरीयकतयैव तल्लभ्येत किं तु जिज्ञास्यत्वेन निर्दिष्टस्य ब्रह्मणो लक्षणं जगदुपादानत्वं वक्तव्यमिति, तच्च लक्षणमुत्पत्तिमात्रसूत्रणे न सिध्यतीत्युक्तं त्रिभिरित्यादिटीकया । तत्र कारणत्वमात्रस्यैव लक्षणत्वसंभवे किमुपादानत्वेनेत्याशङ्क्य ब्रह्मव्यतिरेकेण न प्रपञ्चस्य सत्तेति स्फोरयितुमित्यभिप्रेत्य टीकाशयमाह— **उत्पादकत्वमिति** । अमुमेवार्थं शङ्कान्तरनिराकरणेन दर्शयति— **नापीत्यादिना** । श्रौतप्रतिज्ञायां ब्रह्मप्रमितेः फलत्वालाभात्तल्लाभार्थमार्थिकप्रतिज्ञापरत्वेन व्याचष्टे— **ब्रह्मज्ञानायेति** । लक्षणेनापि ब्रह्मप्रमितिसंभवात्कथं संभावनामात्रमुक्तमित्याशङ्क्य किं लक्षणविधयैव तत्प्रमापकमुतानुमानविधयेति विकल्प्य नाद्य इत्याह— **लक्षणं हीति** । न द्वितीय इत्याह— **कार्येण चेति** । एकत्वासिद्धौ तन्मूलकं सर्वज्ञत्वादिकमपि न सिध्यतीत्याह— **तस्य यदेति** । केवलस्यानुमानस्य तन्निश्चायकत्वाभावेऽपि लाघवतर्कानुगृहीतस्य तन्निश्चायकत्वं स्यादित्याशङ्क्य तदानीमप्युत्कटकोटिकसंशयरूपतदेकत्वसंभावनामात्रहेतुत्वादित्याह— **अयमेवेति** । **संभावनासंभवन्निति** । संभावनारूपो भवन्नित्यर्थः । तर्कस्य प्रमाणानुग्राहकस्य कथं संशायकत्वमित्याशङ्क्य दृष्टविरुद्धत्वेन लाघवतर्कस्य दौर्बल्यमाह—

**विचित्रेति**। तर्हि दुर्बलेन तर्केण कथं संभावनापीत्यत उक्तम्— **प्रायेणेति**। स्वप्नदृष्टानां मायाविनिर्मितानां च तेषां तददर्शनादिति भावः। तथा च दृष्टविरुद्धत्वादिभिराकुलीकृतस्तर्कः श्रुतिरूपप्रबलप्रमाणावष्टम्भे सत्येव निश्चायक इत्याशयेनाह— **एवं चेति**। तर्हि प्रमाणबलादेव वस्तुनो यावत्स्वरूपप्रमिति संभवाल्लक्षणकथनं व्यर्थमित्येतदधिकरणवैफल्यं प्राप्तमित्याशङ्क्य संभावनायाः प्रमाणप्रवृत्त्युपजीव्यत्वात्तदर्थं लक्षणमित्याशयेनाह टीकाकारः— **यथाहुरिति**। न्यायसाम्येन शब्दादीनामपीदं तुल्यमिति भावः। नन्वेतदेवेति भाष्ये संभावनाहेतुत्वेनोक्तमेव जगज्जन्मादिकमनुमानविधयैव कारणस्वरूपज्ञापकमिति मन्यन्त इत्युक्तम्। तावता कथं युक्तीनां संभावनाहेतुत्वद्टीकाकार इत्यत इत्थं नामेत्यादिटीकाभिप्रायमाह— **नैयायिकैरपीति**। न्यायैकप्रयोजनकानामपि वैशेषिकादीनां जगज्जन्मादिविषयासु युक्तिषु प्रमाणत्वभ्रमदर्शनेन तासां प्रमाणाद्भेदः सूक्ष्म इत्यर्थः। टीकायामिच्छन्तीत्यनेन भाष्ये मन्यन्त इत्यनुमानस्य कारणमात्रसंस्पर्शित्वेऽपि तत्स्वरूपविशेषासंस्पर्शेन तन्निश्चयं नास्ति सामर्थ्यमिति सूचितमित्युक्तम्। अमुमेवार्थं प्रकटयितुं सूत्रं लक्षणमुखेनानुमानप्रमाणपरमप्यस्त्विति भाष्ये शङ्का तस्या ब्रह्मणो मानान्तरागोचरत्वप्रतिपादनपरेणोत्तराधिकरणेनैव परिहारादिह तदाशङ्कापरिहारावनवसरदुःस्थावित्याशङ्कां निराकर्तुं टीकायां सुहृद्भावेनेत्युक्तम्। तत्र सुहृद्भावेन कथनस्य प्रयोजनमाह— **उत्तराधिकरणेति**। अन्यथा शङ्काकालुष्यादेतदधिकरणार्थोऽपि न बुद्ध्यारूढो भवेदिति भावः। ननु ब्रह्मणो वेदान्तैकगम्यत्वे सिद्धे वेदान्तवाक्यग्रन्थनार्थता सूत्राणां तदभावे तत्र प्रमाणं भवदनुमानमपि ग्रथ्यतां को दोष इत्यतः परिहारतात्पर्यमाह— **अत्रेति**। **प्रागुक्तयुक्त्या चेति**। कार्येण च कारणं किंचिदित्यादिकयेत्यर्थः। अध्यवसानशब्दस्य प्रसिद्धार्थपरित्यागेन व्याख्याने बीजमाह— **वाक्यार्थेति**। **शाब्दबोध इति**। निदिध्यासनसहितश्रवणमननरूप इत्यर्थः। त्रयाणामपि विचाराधीनत्वेन विचारणाशब्देन ग्रहणमिति भावः। **परस्तादवगतिरेवेति**। न वृत्तिरित्यर्थः। अवगतिरिह न वृत्तिसाक्षात्कारः, किं तु स्वरूपाभिव्यक्तिः; ततश्च युक्तमविद्याद्वयोच्छेदस्य मध्यवृत्तित्वमित्याशयेनाह— **नायमिति**। नन्ववगतेः स्वरूपावगतिपरत्वे मध्यवर्तिनो वृत्तिसाक्षात्कारस्यैवाध्यवसानशब्दार्थत्वसंभवात्किमर्थमभावपरत्वेन व्याख्यानमित्याशङ्कां निराकर्तुं ततो हीति टीका। तया अविद्याद्वयोच्छेदस्य साक्षादेव स्वरूपावगतिनिर्वर्तकत्वात्स एवाध्यवसानशब्दार्थः न तु वृत्तिः व्यवधानादित्येवं परिहारो वर्णित इति दर्शयति— **वृत्तिरूपेति**। ननु केवलस्याप्यनुमानस्य कारणस्वरूपज्ञापने सामर्थ्याभ्युपगमात्कथं तदुपजीवि चेत्यपीति टीका? अत आह—
१८९ **वस्तुविशेषेति**। टीकायां मननस्वरूपकथनमनवसरदुःस्थमित्यत आह— **यदुक्तमिति**। ननु शब्दसहकृतयापि युक्त्या यदि मननरूपा प्रमा तर्हि प्राप्तं ब्रह्मणो मानान्तरगोचरत्वमित्याशङ्क्य शब्द एव बोधनसमर्थत्वात्प्रधानम्, युक्तिस्तु सहकारिणी, अतो न दोष इत्याह— **कारणस्येत्यादिना**। स्यादेतदित्यादिटीकायां ब्रह्मपुरुषबुद्धिविषयः वेदतात्पर्यविषयार्थ-
१९० त्वादनर्वादत्यभिप्रायेण शङ्का, अनुभवायोग्यत्वमुपाधिरिति परिहारः। **अफलत्वादिति**। करणस्य फलवत्त्वनियमादिति भावः। धर्मजिज्ञासायामपि प्रत्यक्षादीनामस्त्युपयोगः यतस्-

त्सामग्र्या व्यापार इति टीकान्वयमभिप्रेत्याह— **धर्मजिज्ञासायामिति ।** अनुभवार्था चेति चशब्दः किंचार्थ इति व्याचष्टे— **न केवलमिति ।** भाष्ये उपरि श्रुतस्य ब्रह्मज्ञानस्येत्यस्य नानुभवावसानत्वादित्यनेनान्वयः । ब्रह्मज्ञाने अनुभवावसानत्वकथनस्यानवसरत्वात्, अतः प्रस्तुतब्रह्मजिज्ञासान्वय एवेत्यभिप्रेत्य टीकायां ब्रह्मजिज्ञासेत्युक्तम्, तनश्च भाष्यमित्थं योजितमासीदित्याशयेनाह— **ब्रह्मजिज्ञासायामिति ।** अवसानपदसूचितं वैषम्यं प्रकटयति— **धर्मजिज्ञासायां त्विति ।** वृत्तेरवसानत्वायोगमाशङ्क्य टीकायामनुभव इत्यादिना स्वरूपाभिव्यक्तिरनुभव उच्यत इत्याशयेनाह— **इहानुभव इति ।** तदनुभव एव त्वित्यत्र स्वरूपानुभवः प्रस्तुतोऽपि न विवक्षितः ब्रह्मणस्तद्विषयत्वनिराकरणसमर्थनयोरसंगतत्वापत्तेः । अतो वृत्तिद्वारा स्वरूपानुभवाशक्यत्वप्रतिपादनपरा टीकेत्याह— **तदनुभव एव त्वित्यत्रेति ।** १९.१ टीकायाम्— अयोग्यत्वादिति । असङ्गोदासीनस्वभावस्येति शेषः । ब्रह्मज्ञानस्य भूतवस्तुविषयत्वसंभवाद्वृत्तेः शक्यत्वे तद्द्वारा स्वरूपानुभवोऽपि शक्य एव, ततश्च युक्तमनुभवावसानत्वं जिज्ञासाया इत्येवमभिप्रायेण भाष्येणैव परिहृतमित्युक्तमत आहेति टीकया । तत्र भाष्ये ब्रह्मणो विषयत्वमात्रे वक्तव्ये तस्य भूतत्वकथनं फलत्वसूचनाय; तदपि जिज्ञासायाः स्वरूपानुभवावसानत्वसमर्थनार्थमित्याशयेनाह— **भाव्य इति ।** परमपुरुषार्थवचन इत्यर्थः । अस्य हेतोः शङ्कोत्तरत्वेन चशब्दस्य समुच्चयार्थत्वासंभवादाह— **चशब्द इति ।** असङ्गोदासीनस्यापि कल्पितं विषयत्वं संभवतीत्युक्तं टीकायाम्— व्यतिरेकेत्यादिना । तत्र व्यतिरेकमात्रविषयकः साक्षात्कार इति भ्रमं वारयति— **व्यतिरेक इति ।** विकल्परूप इति । कल्पितरूप इत्यर्थः । टीकायाम्— न त्वेवं धर्मज्ञानमिति । धर्मजिज्ञासेत्यर्थः । न केवलं धर्मानुभवस्यापुरुषार्थत्वम्, अपि तु तदनुपयोगोऽपीत्याह टीकायाम्— अनुष्ठानसाध्यत्वादिति । न केवलमनुपयोगः अशक्यश्चेत्याह टीकायाम्— न चायमिति । टीकायां कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह— इत्यनेन भाष्येऽन्यथाकर्तुमित्यत्र कर्तुमित्यस्यानुषङ्गो दर्शितः । तत्र हेतुमाह— **अन्यथा कर्तुमित्यत्रेत्यादिना ।** विकल्पोत्सर्गापवादाश्चेति हेतुभाष्ये उत्सर्गापवादयोरपि कथितत्वात्तदनुगुणतया विधिप्रतिषेधान्तरमपि टीकायामुदाहृतम्— एवं नरास्थीति । तत्प्रकटयति— **नारमित्यादिना । नारास्थ्नो ध्वज** १९.२ **त्वेनेति ।** ततश्च 'शिरःकपालं ध्वजवान्' इत्यत्र संनिहितत्वाच्छिरःकपालस्यैव ध्वजत्वेनान्वय इति भावः । **भाष्ये प्रतिषेधाभातीति ।** स्यादेतदित्यादिटीकायामानर्थक्यं द्वेधा शङ्कितम्— अबोधकत्वादभिधेयशून्यत्वमित्येकम्, प्रयोजनशून्यत्वमित्यपरम् । तत्राद्ये कर्तव्य इत्यनेन हेतुः सूच्यते । विधिना कर्तव्यत्वेन चोदितं निषेधेन तदकर्तव्यत्वं कथं बोधयितुं शक्यत इत्यबोधकत्वसूचनात् । द्वितीये च पुरुषस्वातन्त्र्यादिति स्पष्टो हेतुः । तदुत्तरत्वेनावतारिते विधिप्रतिषेधार्थेति भाष्ये अर्थवत्त्वमपि बोधकत्वादभिधेयवत्त्वं सप्रयोजनत्वं चेति द्विविधं विवक्षितम् । तत्र कुत इत्यत आहेत्यवतारितेन विकल्पोत्सर्गापवादार्थेति भाष्येण विकल्परूपेणोत्सर्गापवादरूपेण च बोधकत्वसंभवाद्विधिप्रतिषेधानामर्थवत्त्वमिति अभिधेयवत्त्वप्रतिज्ञायां हेतुसमर्पणेऽपि पुरुषस्य स्वातन्त्र्ये विधिप्रतिषेधानां निष्प्रयोजनत्वमिति शङ्कापरिहारार्थसप्रयोजनत्वप्रतिज्ञायां हेतुर्नोक्त इत्यर्थः । पुरुषापेक्षितहिताहितोपायत्वबोधने विधि-

प्रतिषेधयोः साफल्यमिति टीकाभिप्रायमाह— **स्वातन्त्र्येणेति** । सवासनेत्यत्र पूर्वं-
१९३ पूर्वमनोवासनाभिस्तत्तत्सूक्ष्मरूपैः सहितमिति भ्रमं वारयति— **जाग्रदिति** । सवासने-
न्द्रियेति टीकां व्याचष्टे— **जाग्रद्विपर्यया इति** । विपर्ययग्रहणं संशयस्याप्युपलक्षणम् ।
वस्त्वनतिक्रम्य यथावस्तु, न विद्यते यथावस्तु यासां ता अयथावस्तव इत्यव्ययीभावगर्भो
बहुव्रीहिरिति तदर्थकथनेन दर्शयति— **यथावस्तुत्वमिति** । **नान्यथयन्तीति** ।
नान्यथाकुर्वन्तीत्यर्थः । टीकायाम्— मौलिकमिति । प्राथमिकमित्यर्थः । उत्तरार्धे
'कश्चिद्धीरः' इति दर्शनादधीरो लोकः 'पराङ्पश्यति' इत्यत्र कर्तेत्याशयेनाह— **लोक
इति** । उत्तरार्धस्य चायमर्थः— यः कश्चिदेव धीरो विषयासक्तिरहितः, आवृत्तचक्षुः,
चक्षुर्ग्रहणमिन्द्रियमात्रोपलक्षणम्, प्रत्याहृतेन्द्रियग्रामः, तदनन्तरममृतत्वमिच्छन्प्रत्यगात्मा-
नमैक्षत्साक्षात्कृतवानिति । इन्द्रियाविषयत्वेऽप्यन्तःकरणविषयत्वात्संबन्धग्रहोऽस्त्विति शङ्कां
१९४ निराकर्तुं प्रत्यगात्मनश्चेति टीका । तत्रोपपादनस्थलं दर्शयति— **अपरोक्षत्वादिति** ।
तस्मिन्प्रदेशे अस्मत्प्रत्ययविषयत्वादिति भाष्यव्याख्यानावसरे उपहितस्य विषयत्वोक्त्या
स्वरूपस्याविषयत्वमुपपादितमित्यर्थः । **सिद्धसाधनादिति** । क्लृप्तैरेव जीवैर्महायोगिभिर्ज-
१९५ गत्सृष्टिसंभवादिति भावः । साध्यहीनत्वमेव दर्शयति— **कुम्भमिति** । क्रयस्यापि
यावत्कुम्भोपकरणमध्यनिविष्टत्वादिति भावः । **साधारण्येऽपीति** । उपकरणाद्यभिज्ञ-
कर्तृकमिति साध्ये उपकरणानां यत्किंचिद्यावत्त्वसाधारण्येऽपीत्यर्थः । किं च ईश्वरस्य
ज्ञानं नित्यमनित्यं वा? नाद्यः, ज्ञानं सर्वं जन्यमिति व्याप्तिसत्त्वेन नित्यज्ञानायोगात्; न
द्वितीय इत्याह— **मनःसंयोगेति** । **ऐश्वर्यादिति** । ईश्वरत्वशक्तियोगादित्यर्थः ।
**बुद्धिमिति** । उपलब्धेरैश्वर्याधीनत्वं नाम बुद्धिम् इच्छतस्तस्या एव विलोपादित्यर्थः ।
तथा च कारणस्वरूपसंभावनायामेवानुमानस्योपयोगो न तन्निश्चय इति भावः ।
टीकायां श्रुत्यर्थकथनमनवसरदुःस्थमित्यत आह— **जन्मादिसूत्रेणेति** । तदर्थं
लक्ष्यलक्षकभावसिद्ध्यर्थम् । ननु 'यतो वै' इत्यादिवाक्यस्यापि निर्णायकत्वात्तस्य
न निर्णयवाक्यमिति कथं भाष्यमित्याशङ्क्य, जगत्कारणत्वरूपतटस्थलक्षणांशे निर्णायक-
त्वेऽपि स्वरूपलक्षणांशे न निर्णायकत्वम्; सूत्रं च स्वरूपलक्षणपरमपि, लक्षणद्वयपरत्व एव
१९६ पुष्कलब्रह्मस्वरूपबोधनात्; अतस्तदभिप्रायं भाष्यमित्याह— **अत्र स्वरूपेति** । **पूर्वं नि-
र्णयेऽपीति** । नामरूपाभ्यां व्याकृतस्येत्यादिजगद्विशेषणैर्युक्तिरूपतामापन्नैः स्वतः सं-
भावनामात्रहेतुतया 'यतो वै' इत्यादिवाक्यसहकारितामापन्नैः प्रथमं कारणस्वरूप-
मात्रनिर्णयेऽपि तत्कारणं प्रधानं हिरण्यगर्भो वा परमात्मा वेत्यादिसंशयो न निवर्तते,
प्रधानादीनामपि व्यापकतया ब्रह्मत्वसंभवात् । अतः 'आनन्दाद्ध्येव खलु—' 'यः सर्वज्ञः
सर्ववित्—' 'परास्य शक्तिर्विविधैव श्रूयते' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतितोऽपि
निर्णेतव्यमित्यर्थः । आनन्दवाक्यस्य वा कथं स्वरूपविशेषनिर्णायकत्वं लौकिकानन्दस्यैव प्रयो-
जनतया भूतसृष्टिहेतुभावमाश्रित्य लौकिकानन्दार्थमिमानि भूतानि जायन्त इत्येवमपि वाक्यार्थ-
संभवादित्याशङ्क्य प्रकृतं जगत्कारणमनूद्य किं तत्कारणमित्यपेक्षितस्वरूपविशेषबोधनपरमेव
तद्वाक्यमित्याशयेनाह— **कारणमिति** । अन्यान्यप्येवंजातीयकानीत्यादिभाष्योक्त 'सत्यं

ज्ञानम्' इत्यादिवाक्यान्तराभिप्रायेणाह— **आनन्द इति । आनन्दादेर्भेद इति ।** आनन्दादेर्ब्रह्मणः सकाशात्परस्परस्माच्च भेदे सति न ब्रह्मस्वरूपलक्षणत्वमित्यर्थः । **गुणभूतेति ।** घटमानयेत्यादौ घटकर्मिकानयनक्रियेत्येवं वाक्यार्थबोधादिति भावः । अभेदपक्षमालम्ब्य परिहरति— **अत्रोच्यत इति ।** उक्तनियमः क्वाचित्क इत्याह— **यत्रेति । यस्त्वज्ञात इति ।** यद्यपि कारणरूपेण ज्ञातमेव ब्रह्म स्वरूपलक्षणवाक्ये तदनुवादेनानन्दत्वविधानाभ्युपगमात्, तथापि प्रधानादिव्यावृत्तेन रूपेणाज्ञातत्वं बोध्यम् । **प्रमिते चेति ।** तथा चाज्ञातब्रह्मस्वरूपबोधनेन वाक्यस्य चरितार्थत्वान्न पुनर्विशिष्टपरत्वमित्यर्थः । न च 'यतो वै' इत्यादिवाक्येन ब्रह्मणो जगत्कारणत्ववैशिष्ट्यबोधनादानन्दवाक्येन कारणमुद्दिश्य तस्यानन्दत्वबोधनाच्च कथं न विशिष्टपरत्वमिति वाच्यम्, 'अधीहि भगवो ब्रह्म' इत्युपक्रमे ब्रह्मप्रातिपदिकार्थमात्रस्यैव पृष्टत्वेन तदनुरोधेन 'यतो वै' इत्यादिवाक्यानां जगत्कारणत्वाद्यालम्बनमुखेन 'वायुर्वै क्षेपिष्ठा' इत्यादिवाक्यानां वायुक्षेपिष्ठत्वाद्यालम्बनमुखेन स्तुतिपर्यवसानवद्ब्रह्मस्वरूपमात्र एव पर्यवसानादिति भावः । **न तद्वैशिष्ट्यमिति ।** वाक्यार्थ इति शेषः । कश्चन्द्र इति चन्द्रस्वरूपमात्रस्यैव पृष्टत्वात्तत्परमेव वाक्यम्, न तु प्रकृष्टप्रकाशवैशिष्ट्यपरम्, अनाकाङ्क्षितत्वादिति भावः । अनाकाङ्क्षितत्वेऽप्याकाङ्क्षितोपायत्वात्तत्परत्वमस्त्वित्यत आह— **मानान्तरादिति ।** प्रत्यक्षादेव तत्सिद्धेर्न तत्परत्वमित्यर्थः । तर्हि व्यर्थं तत्कथनमित्यत आह— **उपायस्त्विति ।** स्तुतिविशेषनिर्धारणोपायत्वेन वायुक्षेपिष्ठत्वादेरिव चन्द्रस्वरूपनिर्धारणोपायत्वेन प्रकृष्टप्रकाशस्याकथने तस्य तदुपायत्वाज्ञानेन ततस्तन्निर्धारणानापत्तेस्तत्कथनमावश्यकमिति भावः । ननु तर्हि चन्द्रे प्रकृष्टप्रकाशवैशिष्ट्यं न स्यात् वाक्यस्य तत्र तात्पर्याभावादित्यत आह— **स चेति ।** मानान्तरविरोधाभावाद्वायुक्षेपिष्ठत्वादिवदनुज्ञायत इत्यर्थः । प्रकृते त्वस्ति मानान्तरविरोध इत्याह— **सत्यादीति ।** अनन्तमित्यत्र अन्तः परिच्छेदः, स च देशकालाभ्यामिव वस्त्वन्तरादपि इदमत्र न इदमिदानीं न इतिवदिदमिदं नेत्यपि परिच्छेदस्य व्यावृत्तेरनुभवसिद्धत्वात्; ततश्च त्रिविधपरिच्छेदराहित्यप्रतिपादकानन्तपदविरोधात्त्रिविधपरिच्छेदराहित्यपर्यवसितानिरवधिकमहत्त्वप्रतिपादकब्रह्मपदात् 'एकमेवाद्वितीयम्' इत्यादिश्रुतिभिश्च बाध्यत इत्यर्थः । ततश्च लौकिकवैदिकलक्षणवाक्यानामभेदपरवाक्यानां च अखण्डार्थत्वमेवेति निर्धारयितुमर्थगतमखण्डत्वं लक्षयति— **एवं चेति ।** समभिव्याहृतपदान्तरार्थासंसृष्टमित्यर्थः । तेन चन्द्रे चन्द्रत्ववैशिष्ट्येऽपि नासंभवः । कोकिलः पिक इत्यादिपर्यायानेकशब्दप्रकाशिते वाक्यार्थत्वाभावाद्लक्ष्येऽतिव्याप्तिवारणार्थमपर्यायेति । एवमपि वह्निना सिञ्चेदित्यादौ वह्निसेकरूपं यद्वयं तत्रातिव्याप्तिः, अत उक्तमेकमिति । अनेन समभिव्याहृतपदान्तरार्थसंसर्गागोचरप्रमितिजनकवाक्यत्वमखण्डार्थवाक्यस्य लक्षणं सूचितम् । दृष्टान्तासिद्धिं शङ्कते— **नन्विति । व्यावृत्तिपरत्वानुपपत्तेरिति ।** प्रत्यक्षेण लक्षणवाक्योक्तप्रकृष्टप्रकाशद्वारा चन्द्रप्रमितौ तत्रेतरव्यावृत्तेरपि तत एव प्रमितेरिति भावः । तर्हि वाच्यत्वपरमस्तु लक्षणवाक्यं तस्य प्रत्यक्षायोग्यत्वादित्याशङ्क्याह— **न चेति ।** चन्द्रत्वेनानिश्चिते चन्द्रशब्दवाच्यत्वं साध्यते, निश्चिते वा? नाद्य इत्याह— **अचन्द्र इति । व्याघातादिति ।** वाच्यतावच्छेदकत्वेनानिश्चिते

१९८ १९९ २००

वाच्यत्वप्रतीतेरयोगादित्यर्थः। द्वितीये किं मानान्तरात्तन्निश्चय उत लक्षणवाक्येन? नाद्यः, अयं चन्द्र इति निश्चयवतश्चन्द्रत्वविशिष्टश्चन्द्रशब्दवाच्य इति निश्चयसत्त्वे तत एव तदवगमसंभवेन पुनरुपदेशानपेक्षणात्; तदसत्त्वे वाच्यतावच्छेदकानिश्चयेन तत्साधनायोगात्; न द्वितीय इत्याह— **अथ चन्द्रत्वमिति**। ननु चन्द्रत्वस्यापि प्रत्यक्षत एव निश्चितत्वात्कथं तत्परत्वं लक्षणवाक्यस्येत्याशङ्कां निराकुर्वन्नाह— **तस्मादिति। अज्ञातेति**। ततश्च चन्द्रत्वस्य प्रत्यक्षेण निश्चय एवासिद्धः, तस्य जातित्वासिद्धेः, सिद्धौ वा सुवर्णागरिकरकादिषु तेजस्त्वपृथिवीत्वजलत्वाग्रहणेन जातेर्व्यक्तिसमानवेद्यत्वनियमाभावाद्भावे वा अनभ्यासदशापन्नजलादिज्ञानस्य जलत्वादिवैशिष्ट्यांश इव प्रत्यक्षस्यापि चन्द्रत्ववैशिष्ट्यांशे सत्तानिश्चयरूपत्वाभावात्। अतस्तन्निश्चयाय तद्व्यञ्जकतया प्रकृष्टप्रकाशत्वमुपदेश्यमिति भावः। **अर्थात्त्विति**। अचन्द्रव्यावृत्तेश्चन्द्रशब्दवाच्यत्वस्य चार्थात्सिद्धिरित्यर्थः। ननु वाच्यभेदे लक्ष्यभेदोऽपि कुतो

२०१ न भवेदित्यत आह— **न हीति**। प्रकर्षप्रकाशयोर्वाच्ययोर्नानात्वेऽपि तल्लक्ष्यस्य चन्द्रस्य तदभावादित्यर्थः। किं लक्षकस्य यद्विशेषणं तद्वैशिष्ट्यं लक्ष्यस्यापाद्यते यत्किंचिद्वैशिष्ट्यं वा? नाद्य इत्याह— **मा भूदिति**। नान्त्यः, अप्रयोजकत्वात्। सुवर्णे तेजः जलपृथिव्यन्यत्वे सति रूपवत्त्वादित्यादौ तदभावाचेत्यर्थः। **तर्हीति**। अनित्यत्वस्य तल्लक्षकधर्मासंबन्धवद्ब्रह्मणोऽपि लक्षकसत्तादितादात्म्याभावे ब्रह्म सदाद्यात्मकं न स्यादित्यर्थः। युक्तमनित्यत्वादेर्लक्षणानात्मकत्वं द्वयोरपि सामान्यत्वात्। सत्ताब्रह्मणोस्तु नैवं जातिव्यक्तित्वेन तादात्म्यसंभवादिति परिहरति— **नैतदस्तीति**। नन्वेवं घटादीनामिव ब्रह्मणोऽपि सत्तादिजात्याश्रयत्वं स्यात् न तु तद्रूपत्वमित्याशङ्क्य व्यक्तिभेदस्य कल्पितत्वेन सत्तादीनां सामान्यत्वं कल्पितम्, तथा परस्परभेदोऽपि कल्पितः, ततश्च कल्पितभेदभिन्नव्यक्त्यनुगतसत्तादिसामान्यमुखेन लक्ष्यमाणं ब्रह्म भेदकोपाधिबाधेन भेदबाधनात्सच्चिदानन्दात्मकं निर्धार्यत इति श्लोकव्याख्यानपूर्वकं दर्शयति— **इह कल्पितेत्यादिना**। ब्रह्मणश्चिदानन्दरूपत्वमपि दर्शयितुमाह— **तथा ज्ञानत्वेति**। इन्द्रियसंप्रयोगादिजन्यान्तःकरणवृत्तिविशेषोपधानलब्धभेदचिद्विशेषानुगतेन ज्ञानत्वेन स्रक्चन्दनवनितादिसंस्पर्शजन्यान्तःकरणवृत्तिविशेषोपधानलब्धभेदानन्दविशेषानुगतेनानन्दत्वेन च लक्ष्यमाणयोश्चिदानन्दव्यक्त्योरपि ताभ्यां तादात्म्यं योज्यमित्यर्थः। सत्यज्ञानानन्दादिपदानामखण्डार्थत्वं साधयितुं सदादिभेदमपि निराकरोति— **यथा चेति**।

२०२ सदादिभेदस्यौपाधिकत्वसाधनफलमाह— **तथा चेति**। व्यक्त्याकारः व्यक्तिभेदः। **विशिष्टार्थेति**। पदान्तरार्थसंसृष्टार्थपरत्वरहितमित्यर्थः। तेन दृष्टान्ते न साध्यवैकल्यम्। एवं तत्पदार्थविषयावान्तरवाक्यानामखण्डार्थत्वं प्रसाध्य तत्त्वमस्यादिमहावाक्यानामपि तत्साधयति— **तथेति**। अनेन तत्त्वमस्यादिवाक्यमखण्डार्थम् उपाधिभेदभिन्नार्थैक्यप्रतिपादकत्वात् महाकाशो घटाकाश इति वाक्यवत् इत्यनुमानमुक्तम्। न च हेत्वसिद्धिः आत्मनः स्वतो भेदाभावात्। आत्मा स्वसमानसत्ताकद्रव्यत्वावान्तरजातिरहितः विभुत्वादाकाशवत्। अत्र धर्मिसमानसत्ताकेति विशेषणात्तरङ्गचन्द्रानुगतचन्द्रत्वन्यायेनोपाधिभेदभिन्नेषु जीवेश्वरेषु कल्पितात्मत्वजात्यभ्युपगमेऽपि न बाधः। न च हेत्वसिद्धिः, परिशेषाद्विभुत्वस्यैव सिद्धेः। ततश्चौपाधिक एव भेद इत्याह— **निरंशस्येत्यादिना**। अनुमानानुग्राह्यं प्रमाणमप्याह—

**श्रूयते चेति** । बहुधा भिन्ना अपोऽनुगच्छन्नुपाधिना अद्रूपेण भेदरूपो भिन्नरूपः क्रियते एवमात्मा क्षेत्रेषु शरीरान्तःकरणादिषु तद्रूपेणोपाधिना भिन्नरूपः क्रियत इत्यर्थः । **एवंभूतस्येति** । अद्वितीयस्येत्यर्थः । विचित्रशक्तिसंपन्नाविद्यामहिम्ना जगदुत्पत्तिस्थिति-लयाधिष्ठानत्वमुपपद्यत इति परिहरति— **अत आहेति** ॥

शास्त्रयोनित्वात्। **साध्याविशेषादिति**। शास्त्रयोनित्वस्य हेतोः 'अस्य महतो भूतस्य' २०३ इत्यादिश्रुत्या सिद्धौ 'यतो वै' इत्यादिश्रुत्या साध्यस्यापि सिद्धिः स्यादिति व्यर्थो हेतुः। अथ श्रुतितिरोधानेन साध्यस्यासिद्धिरुच्यते, तर्हि हेतोरप्यसिद्धिरिति कथं स साध्यसाधकः स्यादित्यर्थः। आर्थिकी या प्रतिज्ञा ब्रह्म सर्वज्ञमिति प्रतिज्ञा, तयेत्यर्थः। आर्थिकेत्यनेन विचार्यस्य ब्रह्मणो निर्विशेषत्वेऽपि जीवो न जगत्कारणमिति पूर्वसूत्रोपक्षिप्तार्थो-पयोगितया तस्य सर्वज्ञत्वमर्थात्साध्यत इति सूचितम्। एतच्चोपलक्षणम्; सर्वशक्तित्वमपि पूर्वसूत्रेऽर्थात्प्रतिज्ञातम्, अस्मिन्सूत्रे निःश्वसितश्रुतिस्वारस्येन साध्यत इत्यपि द्रष्टव्यम्। तथा चोपसंहारभाष्ये सर्वशक्तित्वं चेत्युक्तम्। भाष्यटीके अनपेक्ष्य प्रकारान्तरेणापि संगतिर्वक्तुं शक्यत इति स्वयमाह— **अथ वेति** । जगत्कारणत्वेन सिद्धस्य सार्वज्ञ्यस्य तदेकदेशवेदकारणत्वेन पुनः साधने हेतुपौनरुक्त्यमित्याशङ्क्य वेदत्वेन वेदकारणत्वमभ्युच्चय-हेतुत्वेनोच्यत इति परिहरति— **अभ्युच्चयार्थत्वेनेति** । तर्हि नाधिकरणान्तरत्वमि- २०४ त्याशङ्क्य हेतोरसिद्धत्वाद्याशङ्कायां तत्साधनार्थत्वाद्युक्तमधिकरणान्तरत्वमित्याह— **इत्यन्त-रेति** । आशङ्क्य निराकरिष्यते इति। येऽपि तावदित्यादिटीकयेत्यर्थः। न केवलमित्यादिटीकया चतुर्णां वर्णानामाश्रमाणां च गर्भाधानादिश्मशानान्तानि यानि गृह्यकर्माणि ब्राह्ममुहूर्तमारभ्य रात्रिप्रथमयामपर्यन्तमनुष्ठेया गार्ह्यवैतानिकक्रियारूपा या नित्यादिकर्मपद्धतयो यच्च ब्रह्मतत्त्वं तस्य सर्वस्यापि श्रेयःसाधनतोपदेशेन शिष्यानुशासकतया शास्त्रत्वेन महाविषयत्वादेव केवलं न महत्त्वम्, किं त्वनेकाङ्गोपाङ्गोपकरणतयापीत्युक्तम्। तत्र शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गानां प्रसिद्धत्वादुपाङ्गानि पुराणादीनि दर्शयति— **पुराण-न्यायेति** । **सृष्टिवाक्यापेक्षितेति** । संग्रहवाक्यस्य प्रपञ्चनापेक्षत्वादिति भावः । २०५ जातिव्यक्त्यीत्युपलक्षणम्; प्रमाणादिनिरूपणेनेत्यपि द्रष्टव्यम्। **सुव्यक्त इति** । मीमांसाया वाक्यार्थनिर्णयद्वारा धर्मशास्त्राणां वेदानुमानद्वारा षडङ्गानां वेदस्वरूपतदर्थनिर्णयद्वारा चोपयोगः सुव्यक्त इत्यर्थः । टीकायाम्— अन्वयमुक्त्वेति । शास्त्रयोनित्वस्य हेतोः श्रुतियुक्तिभ्यां सद्भावमुक्त्वा व्यतिरेकं पुरस्कृत्य ततः सर्वज्ञत्वमाहेत्यर्थः। **उक्तमर्थमिति**। भाष्यखण्डाभ्या-मुपक्षिप्तमर्थमुदाहरणाद्यवयवोपन्यासेन प्रमाणवन्तं करोतीत्यर्थः। भाष्यखण्डोपक्षिप्तमेवार्थं प्रक-टयति— **अत्रायमिति**। **विभक्तत्वेति**। वेदः कार्यं विभक्तत्वात् घटवदित्यनुमानोपबृंहितये-त्यर्थः। **व्याप्तिरुक्तेति**। उपनयनिगमनविभागस्तु टीकायामेव स्पष्ट इति भावः। **शास्त्रविदो-** २०६ **पणमिति**। अर्थविरोपणत्वे 'प्रथने वावशब्दे' इति सूत्रेण घञ्प्रत्यये विस्तार इति रूपापत्त्या 'ऋदोरप्' इति सूत्रविहितावन्तस्य विस्तरशब्दस्य शब्दप्रपञ्चवाचित्वादित्यर्थः। अनेन विस्तरा-र्थमित्यर्थशब्दस्य धर्ममात्रपरत्वमाश्रित्य विस्तररूपो धर्मो यस्येति व्याख्यानादर्थवेदादिरूपे शास्त्रेऽर्थवादादिबहुलं शब्दमात्रस्यैव प्रपञ्चो नार्थस्येति वेदस्य ब्रह्मज्ञानस्य च तुल्यविषयत्वभ्रा-

न्तिर्निर्वर्तिता भवतीत्यर्थः । **प्रयोजनमिति** । ततश्च ततोऽधिकविषयज्ञानवत्त्वसाध्यस्य न बाध इति बाधनिरासोपयोगाद्विशेषणसाफल्यमिति भावः । टीकायाम्— कथयित्वुमिति । सूचयितुमित्यर्थः । नैयायिकरीत्याश्रयणेनानुमानमारचयति— **इदमिति** । **वेदविषयादिति** । वेदविषयादधिको यो विषयस्तज्ज्ञमपि वेदार्थतदधिकार्थोभयविषयकज्ञानवदित्यर्थः । **तत्कर्तृत्वादिति** । अन्यदीयानुपूर्व्यनपेक्षणेन कृत्स्नवेदवक्तृत्वादित्यर्थः । तेन सकलवेदवक्तृषु मन्वादिषु दैवाद्वेदसमानानुपूर्वीकयत्किंचिद्वाक्यवक्तरि च न व्यभिचारः । **यो यद्वाक्येति** । यस्य वाक्यस्य प्रमाणत्वेनैतदर्थप्रमां जनयत्विति बुद्ध्या कर्तेत्यर्थः । तेनार्थानभिज्ञाध्यापकादिषु सामान्यव्याप्तेर्न व्यभिचारः । सर्गादौ च वेदान्प्रवर्तयत ईश्वरस्य तत्तदर्थविवक्षास्तीति व्याप्यस्य पक्षवृत्तित्वम् । ननु वेदविषयाधिकविषयज्ञत्वसिद्धावपि कथं सर्वज्ञत्वसिद्धिरित्यत आह— **सर्वावभासकेति** । वेदार्थज्ञत्वमात्रसाधनेऽपि तावद्विषयकस्य सर्वविषयकत्वमवर्जनीयमिति वेदकर्तृत्वहेतोः पक्षधर्मताबलादेव सर्वज्ञत्वं सिध्यति । यदा पाणिन्यादिदृष्टान्तेन वेदविषयाधिकविषयज्ञानवत्त्वं साध्यते, तदा किमु वक्तव्यमिति भावः । एवं सूत्रभाष्यादिसूचितं सर्वज्ञत्वपर्यवसाय्यनुमानं प्रदर्श्य स्वयं साक्षात्तत्साधकमनुमानमाह— **यद्वेति** । एतदन्यत्वविशिष्टं यदसर्ववित्कर्तृकत्वं तदनधिकरणम् एतदन्यत्वविशिष्टं यदवेदत्वं तदनधिकरणं च यत्सकर्तृकं तदन्य इत्यर्थः । एतच्च साध्यं पक्षीभूतघटरूपसकर्तृकान्यत्वमादाय दृष्टान्ते प्रसिद्धं तस्यासर्ववित्कर्तृकत्वावेदत्वाधिकरणत्वेऽप्येतदन्यत्वाभावेन विशेषणाभावप्रयुक्तविशिष्टाभावमादाय यथोक्तविशेषणद्वययोगित्वात् । पक्षे तु वेदान्यत्वमादाय साध्यं सिध्यद्वेदस्य सर्ववित्कर्तृकत्वमन्तर्भाव्य पर्यवस्यति । एतदन्यत्वे सति सकर्तृके वेदे यथोक्तविशेषणयोरसर्ववित्कर्तृकत्वावेदत्वरूपविशेष्याभावप्रयुक्तविशिष्टाभावमादायैव वक्तव्यतया एतदन्यत्वविशिष्टसर्ववित्कर्तृकत्वाधिकरणैतदन्यत्वविशिष्टवेदत्वाधिकरणसकर्तृकान्यत्वमादायैव साध्यपर्यवसानात् । अत्रासर्ववित्कर्तृत्वेनार्थान्तरवारणाय प्रथमविशेषणम् । एवमपि सर्ववित्कर्तृकयत्किंचिदन्यत्वमात्रं सिध्येत् वेदकर्तुश्च सर्वज्ञत्वमुद्देश्यमिति तत्सिद्ध्यर्थं द्वितीयविशेषणम् । वेदस्याकर्तृकत्वमादाय पक्षे साध्यपर्यवसानेनार्थान्तरवारणाय सकर्तृकेति । दृष्टान्ते साध्यप्रसिद्ध्यर्थमेतदन्यत्वेति विशेषणम्, पक्षीभूतघटान्यत्वमादायैव तत्र साध्यप्रसिद्धेर्वक्तव्यत्वात् । न च वेदान्यत्वमादायैव तत्र साध्यप्रसिद्धिरस्त्विति वाच्यम्, पक्षे साध्यसिद्धेः प्राग्वेदेऽसर्ववित्कर्तृकत्वानधिकरणसकर्तृकत्वानिश्चयात् । प्रयत्नशब्दो व्यापारपर इत्यभिप्रेत्याह— **ईक्षणादीति** । **सापेक्षत्वमिति** । ततश्च सापेक्षत्वेन कृत्स्नवेदाप्रामाण्याद्दूरं निःश्वसितश्रुतिमात्रस्योपचरितार्थत्वमिति न तद्बलात्सर्वज्ञत्वसिद्धिरित्यभिप्रेत्य वेदस्य सापेक्षत्वं वदन्पूर्वपक्षी प्रष्टव्य इत्यर्थः । **द्वितीये इति** । किमानुपूर्व्या व्यक्त्यन्तरत्वमेवाभिनवत्वम्, विलक्षणत्वमेवेत्यर्थः । टीकायामानुपूर्वीभेदं दृष्टान्तमुखेन प्रकटयति— तथा हीति । टीकायाम्— माणवकव्यक्तीनामन्यत्वादिति । ततश्च तदर्थानुपूर्व्या अप्यन्यत्वमित्यर्थः । टीकायां क्व तर्हि विवाद इत्याशङ्क्य वर्णानित्यत्ववादिनः पुरुषस्य वेदरचनायांस्वातन्त्र्यमाहुः, वर्णनित्यत्ववादिनस्तु नेति, तस्मिन्नंशे विवाद इत्याह—केचिदिति । तर्हि पुरुषास्वातन्त्र्यं वदद्भिर्जैमिनीयैरविरोधात्कथं विवाद इत्याशङ्क्य, ते हि वेदस्रष्टृपुरुषानभ्युपगमेन पृथग्जनाना-

मस्वातन्त्र्यं वदन्ति, वयं तु तदभ्युपगमेन तस्याप्यस्वातन्त्र्यं ब्रूम इत्यस्ति विरोध इत्याशयेनाह टीकायाम्—अत्र सर्वीति। लब्धसर्वशक्तिज्ञानस्येति टीकायां सर्वेति शक्तिज्ञानोभयविशेषणम्। टीकायाम्— न सर्गान्तरे विपरियन्तीति। पूर्वपूर्वपरिणामसंस्कारसहकृताविद्यापरिणामत्वादिदानींतना अपि न विपरीता भवन्तीत्यर्थः। अन्यथेत्यादिटीकाया-मानुपूर्वीरहितं वेदोच्चारणमनर्थहेतुरित्यर्थः। तत्प्रकटयति-- मन्त्रो हीन इति। न केवलं यदर्थविवक्षया प्रयुक्तो मन्त्रस्तदप्रतिपादकत्वेन समीहितासाधकत्वम्, किं त्वनर्थहेतुरपीत्याह— स वाग्वज्र इति। स मन्त्रो वाग्रूपवज्रः सन् यजमानं हिनस्ति यथा इन्द्रशत्रुपदपठितः 'स्वाहेन्द्रशत्रुर्वर्धस्व' इति मन्त्रस्त्वष्ट्रा इन्द्रस्य शत्रुः शातयिता हन्ता पुत्रो वर्धतामित्यर्थमभिप्रेत्य प्रयुक्तोऽपि तदनुगुणतत्पुरुषान्तोदात्तस्वरं विहाय बहुव्रीहिस्वरेणेन्द्रशब्दगतेकारस्योदात्तत्वेन प्रयुक्ततया इन्द्रः शत्रुः शातयिता हन्ता यस्य पुत्रस्येत्यर्थपर्यवसानेन यजमानं त्वष्टारं तत्पुत्रवृत्रासुरहननेन हिंसितवानित्यर्थः। टीकायाम्— तथास्माकमिति। वेदस्य स्रष्टैव नास्तीति योऽयं तेषामभिनिवेशः श्रुतिविरुद्धस्तद्व्यतिरिक्तविषये समानमित्यर्थः। अवगतसार्वज्ञ्य इति। अवगतमहिमविशेषवतीत्यर्थः। इदानींमेव सर्वज्ञत्वसाधनेन सिद्धवत्तदुपन्यासायोगान्महिमपरिज्ञानमप्यस्मदादीनामशक्यमिति शङ्कते— नन्विति। विश्वसनीयतमानां सर्गादिभुवां प्रत्यक्षस्य स्वप्रत्यक्षसमत्वादुक्तो विश्वास इति परिहरति- तत्राहेति। वर्णकान्तरपक्षे संगतिमाह टीकायाम्— पूर्वेणेति। जगत्कारणत्वलक्षणस्यानुमानविषया ब्रह्मलक्षकत्वशङ्कानिरासेन ब्रह्मणो वेदैकप्रमाणकत्वं वक्तुमिदमधिकरणमित्यर्थः। नन्वेतदपि तत्रैव कृतमित्याशङ्क्याह टीकायाम्— व्युदस्येति। ब्रह्मस्वरूपस्य यल्लक्षणं जगत्कारणत्वं तस्य या असंभवाशङ्का असङ्गोदासीनस्वभावस्य कथं कारणत्वमित्यादिशङ्का, तां विचित्रशक्तिसंपन्नाविद्याविषयीकृतस्योपपन्नं कारणत्वमित्येवं व्युदस्येत्यर्थः। तत्र लक्षणस्य यदनुमानत्वं निराकृतं तदिहत्यमेव सुहृद्भावेनोक्तमिति भावः॥

२११

२१२

तत्तु समन्वयात्। अधिकरणमारचयति--- वेदान्ता इति। सिद्धान्तकोटिमुन्मेयार्थमाह-- रूपादिहीनमिति। टीकायामप्रयोजनत्वापत्तेरप्रामाण्यप्रसङ्गाच्चेति हेत्वोः कथं पुनरिति भाष्यनिर्दिष्टप्रतिज्ञायामन्वयः। मीमांसकानां पूर्वपक्षित्वान्नाप्रामाण्यपर्यवसायी पूर्वपक्षः, किं तु क्रियार्थत्वपर्यवसायीत्यभिप्रेत्योक्तं टीकायाम्— न चैतैरित्यादि। अक्रियार्थानामानर्थक्यमित्यस्य सिद्धान्त्यसंमतत्वात्कथं तं प्रति तस्य प्रमाणत्वेनोपन्यास इत्यत आह— जैमिनीति। अपि त्विति। न्यायसूत्रसंमतत्वेन पूर्वपक्षस्य दार्ढ्यम्, तस्मादनित्यमुच्यत इति सूत्रोपात्ताप्रामाण्यहेतुत्वेनोक्तमानर्थक्यमभिधेयशून्यत्वमेव कुतो न भवेदित्यत आह— अभिधेयेति। देवतादीत्यादिपदेन द्रव्यादिकम् 'आज्यमसि' इत्यादिमन्त्रप्रकाश्यं गृह्यते। अमुमेवार्थं मन्त्राधिकरणेन स्फुटयति— मन्त्रा इति। किं केवलदृष्टार्था मन्त्रा उतादृष्टार्था अपीति विकल्प्य प्रथमं निराकृत्य द्वितीयं शङ्कते--- अथेति। उच्चारणादेवेत्यत्र हेतुमाह-- तस्येति। फलाकाङ्क्षायां हि दृष्टमदृष्टं वा फलं कल्प्यम्। सा च नियोगाधीना। स च स्वव्यापारे उच्चारणेनार्थज्ञान इत्यर्थः। अर्थस्मृतेः फलत्वसिद्ध्यर्थमाह— अर्थस्मृतिरिति। टीकायाम्— राद्धान्तसूत्रमनुग्रहीष्यत इति। पदान्तराणां विधेयव्रह्मस्तुत्यर्थत्वादिति भावः।

२१३

२१४

२१५

अन्यलभ्यत्वात्प्रवृत्तिर्नोत्पत्तिविधिकार्यमित्याह-- **अधिकारविधित इति** । अज्ञातज्ञापकेऽपि पुत्रस्ते जातः इत्यादिसिद्धार्थबोधके वाक्ये विधिव्यवहाराभावात् क्रियाविषय एव विधिरित्युक्तमनागतेत्यादिटीकायाम् । तत्र भावशब्दो भावयतेर्घञ्प्रत्यये सति निष्पन्नत्वाद्भावनावाचीत्याह-- **भावो भावनेति** । तर्हि कथमुत्पत्तिविधेरप्रवर्तकस्य विधित्वमित्याशङ्क्य सोऽपि परम्परया प्रवर्तक एवेति दर्शयितुं टीकायां विधीनामविनाभाव उक्तः । तं प्रकटयति-- **अधिकार इत्यादिना** । **फलसंबन्धेति** । क्रियायाः पुरुषाभिलषितफलसंबन्धबोधनमित्यर्थः । **फलशेषत्वेति** । शेषत्वज्ञापनमेव विनियोगः । प्रधानक्रियाभिप्रायेण फलग्रहणम् । नन्विन्द्रियाद्यर्थतया विधीयमानदध्यादिस्थल इव प्रकृतेऽपि फलदर्शनाद्विधिचातूरूप्यमस्त्वित्या-

२१६ शङ्कां निराकर्तुं सिद्धे चेति टीका; तत्रासंभवं प्रकटयति-- **सिद्धं चेदिति** । दध्यादिस्थले अस्ति पुंव्यापारो नात्रेति वैषम्यमिति भावः । टीकायां न खलु विनियोगादयः सन्तीत्यग्निहोत्रवाक्ये विनियोगादिप्रतीत्यभावकथनं प्रौढिवादेन । सन्तोऽपीत्यादिटीकया प्रतीयमाना अपि न विवक्षिता इति यदुक्तं तदेव संमतमित्याशयेनाह-- **सर्वविधिष्विति** । उत्पत्तिविधौ फलाश्रवणात्कथमधिकारादिप्रतीतिरित्याशङ्क्य सामान्यरूपेण तत्रापि फलमर्थात्प्रतीयत इत्याशयेनाह-- **अग्निहोत्रमिति** । नन्वन्यथैव वाक्यार्थोऽस्त्वित्याशङ्क्य किमग्निहोत्रं भावयेदिति वाक्यार्थ उताग्निहोत्रनामको होम इति विकल्प्य नाद्य इत्याह-- **न त्विति** । **अफलत्वादिति** । प्रवर्तनासंबन्धमहिम्ना भावनायाः समीहितभाव्यकत्वनियमेन तद्भिन्नस्य भाव्यत्वायोगादिति भावः । द्वितीयं निराकरोति-- **न चेति** । कालविशेषसंसर्गित्वेनैव सत्ताया बोध्यतया तदसंसर्गिवस्तुबोधनेन तत्र प्रवर्तकस्य विधेरुद्धारापातादित्यर्थः । **प्राप्तविनियोगादीति** । अग्निहोत्रनामकं होमं कृत्वा तेन स्वर्गकामः स्वाभिलषितं स्वर्गं संपादयेदिति वाक्यार्थादिति भावः । ननु वेदान्तानां ब्रह्मोपासनापरत्वे ब्रह्मण्यपि तात्पर्यं कुतो न भवेदित्याशङ्क्य प्रत्यक्षादिप्रमाणविरुद्धत्वान्नेति भङ्ग्यन्तरेणाह-- **विधिपरत्व इति** । ननु 'तत्त्वमसि' इत्यादिवाक्यैरुपासनापरैरपि जीवब्रह्माभेदरूपमुपास्यं समर्पणीयम् अन्यथा

२१७ तदुपासनायोगात्; तथा च कथं न प्रत्यक्षादिविरोध इत्यत आह -- **जीव इति** । 'मनो ब्रह्मेत्युपासीत' इत्यादौ मनसि ब्रह्मदृष्टिवज्जीवेऽपि ब्रह्मदृष्टेरारोपत्वसंभवान्न जीवब्रह्मैक्यपरत्वमिति न विरोध इति भावः । तदिति सूत्रपदोक्तमिति । प्रस्तुतं ब्रह्मोद्दिश्य तदित्यनेन पूर्वसूत्रनिर्दिष्टस्य शास्त्रप्रमाणकत्वस्य विधानादित्यर्थः । टीकायाम्-- कर्कशाशय इति । वेदान्तानामन्यपरत्वमेवेति क्रूराशय इत्यर्थः । जगदुत्पत्तिस्थितिलयकारणमित्यनेन कथम्

२१८ 'यतो वै' इत्यादिवाक्यमुक्तं भवतीत्यतः संबन्धिदर्शनन्यायेनेत्याशयेनाह-- **तद्ब्रह्मेति** । संबन्धज्ञापनार्थमेव टीकायां पूर्वमुदाहृतमित्युक्तम् । न त्वन्तरावाक्य इति । ननु तत्रापि ध्रौवाज्यलाभः कुतो न भवेदित्याशङ्क्य यज्ञत्वे सिद्धे 'सर्वस्मै वै' इति वाक्येन ध्रौवाज्यं लभ्यते यज्ञत्वं च विध्यधीनं न चान्तरावाक्ये विधिरस्तीत्याशयेनाह-- **यजतीति चेति** ।

२१९ **अवलम्बत इति** । अनुवर्तत इत्यर्थः । अन्वक्शब्दार्थमाह-- **निरन्तरयोरिति** । **आलस्यं स्यादिति** । यद्यपि सौन्दर्यवाचिनो जामिशब्दस्य सादृश्ये लक्षणेत्युक्तं पूर्वतन्त्रे, तथापि तस्य दोषत्वं नैरन्तर्येण सदृशानुष्ठाने सत्यालस्यापादकत्वेनेति तथोक्तम् । ननु सत्यं

जामितादोषोपक्रमपूर्वकं पुरोडाशयागविसदृशोपांशुयाजमभिधानेनाजामित्वोपसंहारादेकमिदं वाक्यमितिदेवविधानं (?) विष्ण्वादिवाक्ये कुतो न भवेदित्यत आह— **एकवाक्यता चेति। उपांशुयाजविधाविति।** उपांशुयाजवाक्ये विधावित्यर्थः। अनेन सदृशनैरन्तर्यप्रयुक्तस्य दोषस्य तदन्तराले विसदृशविधानैकनिवर्त्यतया विष्ण्वादिवाक्येषु श्रुतमप्यजामित्वं योग्यतयाऽन्तरालविहिते याग एवान्वेति। अत एव तैत्तिरीयके तत्रैवाजामित्वं श्रूयते। एवं टीकायामनूचोरित्येकवाक्यताबलादिति च शब्दसूचिते सिद्धान्तयुक्ती प्रदर्श्य पूर्वेतिपदसूचितामभ्युच्चययुक्तिं शङ्कामुखेन दर्शयति— **नन्वित्यादिना।** अनुवाद्योऽयं कर्माभावमुपपादयति— **तथा** २२० **हीति। देवतात्वमिति।** लक्षणीयमित्यन्वयः। **विधिश्चेति।** लिङर्थे लेडिति विधानादिति भावः। देवतालाभमाह— **आग्नेयादीनिति।** स्तावकत्वमेव दर्शयति—**इत्थमिति। ऐतरेयक इति।** ऐतरेयिणां बह्वृचानामाम्नाय इत्यर्थः। **स एतमेवेति।** अनेन प्रत्यगा- २२१ त्मैव ब्रह्मेत्युपक्रान्तम्। **समाप्तौ चेति।** 'प्रज्ञानं ब्रह्म' इत्यत्र प्रज्ञानशब्दनिर्दिष्टस्य जीवस्य ब्रह्मभाव एवोपसंहृत इत्यर्थः। नन्वयमभिसंधिरित्यादिटीका न युक्ता भाष्यटीकयोर्भूतार्थत्वेनैव सापेक्षत्वस्य शङ्कितत्वया किं पुंवाक्यानां सापेक्षता भूतार्थत्वेन आहोस्वित्पौरुषेयत्वेनेति विकल्पायोगादित्याशङ्क्य नायं हेतुद्वयविकल्पः किं तु हेतूपाधिविकल्पः, ततश्च सापेक्षत्वे भूतार्थत्वं वा प्रयोजकं पौरुषेयत्वं वेति विमृश्य तत्राद्यं व्यभिचारेण दूषयित्वा अथेत्यादिना पौरुषेयत्वस्यैव प्रयोजकत्वेन तस्योपाधित्वमुक्त्वा तदभावान्न वेदान्तानां सापेक्षत्वमित्येवमभिप्राया टीका। अत एव पुंवाक्यानामिति च दृष्टान्त एव विमर्शविषयत्वेन निर्दिष्टः हेतुविकल्पत्वे वेदान्तानां सापेक्षत्वं किं भूतार्थत्वेन उत पौरुषेयत्वेनेत्येव वाक्यशैलीप्रसङ्गादित्याशयेनाह— **वेदान्ता यद्यपीति। प्रसङ्गहेतोरिति।** अनिष्टप्रसञ्जकहेतोरित्यर्थः। **अपिशब्देनेति।** परिनिष्ठितवस्तुस्वरूपत्वेऽपि २२३ न प्रत्यक्षादिसापेक्षत्वमित्युक्त्या परिनिष्ठितवस्तुस्वरूपपरत्वं न सापेक्षत्वे तन्त्रम्, किं त्वन्यदेवेति सूचनादिति भावः। **तस्यैवेति।** यस्य हेतोः सोपाधिकत्वं वक्तुमिष्टमित्यर्थः। ननु यद्युच्येतेत्यादिटीकायाः पौरुषेयत्वेन हेतुना सापेक्षत्वमाशङ्कयते तस्मात्पौरुषेयत्वेन सापेक्षत्वं दुर्वारमित्युपसंहारात्, भूतार्थत्वं तु पौरुषेयत्वसाधकवाक्यत्वलिङ्गविशेषणमभिमतं तदेव त्वित्यादिना भूतार्थस्य मानान्तरयोग्यतया बुद्धिपूर्वकविरचनरूपपौरुषेयत्वानुगुण्येनापौरुषेयत्वविरोधिभूतार्थत्वमित्युपपादनात् न तु भूतार्थत्वेनेत्युपसंहारे सापेक्षत्वे तद्धेतुत्वप्रतिक्षेपात्, ततश्च कथं हेतूपाधिविकल्पपरत्वेन पूर्वटीकाव्याख्यानमित्याशङ्क्य प्रागुदाहृतटीकानुरोधेन भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघात इत्युत्तरटीकानुरोधेन च तथैव व्याख्या युक्ता, यद्युच्येतेति टीका च साधनव्यापकतया पौरुषेयत्वानुपाधित्वे सत्युदाहृतव्यभिचारपरिहाराय वाक्यत्वविशेषितेन भूतार्थत्वेन हेतुना वेदान्तानां सापेक्षत्वं दुर्वारम्। अयमेव च हेतुः पौरुषेयत्वेऽपि, तेनापि सह व्याप्तेः; तस्मात्पौरुषेयत्वेन सापेक्षत्वं दुर्वारमित्यस्यापि वेदान्तानां पौरुषेयत्वेन साधनव्यापकतया तस्यानुपाधित्वे भूतार्थवाक्यत्वेन सापेक्षत्वं दुर्वारं न तु भूतार्थत्वमात्रेण 'प्रत्यक्षादिषु व्यभिचारादित्येवंपरा टीकेत्याशयेनाह—**वाक्यस्य सत इति।** ननु स्वपक्षेऽपि वाक्यत्वेन सापेक्षत्वानुमानं कुतो न भवेदित्यत आह—**कार्यपरतायां हीति। न च साधनेति।** तदानीं वाक्यत्वेन पौरुषेयत्वं नानुमातुं शक्यम् अपूर्वस्य २२४

कार्यस्य मानान्तरागोचरस्वभावतया तदर्थज्ञानवत्पुरुषविरचितत्वरूपपौरुषेयत्वसाधने बाधादिति भावः। टीकायाम्—आतिष्ठामह इति। प्रतिजानीमह इत्यर्थः। वेदान्तानां कार्यार्थत्वे वाक्यत्वेन सापेक्षत्वानुमानं न संभवति, भूतार्थत्वे तु संभवतीति वैषम्यं सिद्धं पौरुषेयत्वेन सोपाधिकत्वस्य तुल्यत्वात्; अतोऽपौरुषेयत्वाय नियामकान्तरमास्थेयमिति टीकाकारः परिहरतीत्याह—**कार्ये मानान्तरेति**। **ततश्चेति**। कार्यपरत्वेऽपि पौरुषेयत्वस्य संभाविततया साधनव्यापकत्वस्यापि संभावितत्वादनुमानप्रवृत्तिरविकलेति भावः। **पौरुषेयत्वमिति**। ततश्च तस्य साधनव्यापकत्वनिश्चयेनानुपाधित्वे वाक्यत्वलिङ्गकं सापेक्षत्वमपि दुरपवादमिति भावः। किं धात्वर्थः कार्यमुत लौकिकमिति विकल्प्य यदशक्यमित्यादिटीकाभिप्रायवर्णनेन प्रथमं निराकृत्य द्वितीयं शङ्कते—**तर्हीति**। ननु लिङादिप्रत्ययात्कार्यत्वेन कार्यं प्रतीयते, अतस्तदनुरोधेन तत्र संगतिग्रहोऽप्यवश्यमभ्युपगन्तव्य इति शङ्कते—**नन्विति**। किं कार्यत्वेनापि वेषेण कार्यमात्रे पचेतेत्यादौ शक्तिग्रह उत क्रियाविलक्षणे कार्ये स्वर्गकामादिवाक्य एवेति विकल्प्य नाद्य इत्याह—**तत्राहेति**। द्वितीयं शङ्कते—**स्वर्गकामेति**। अतिप्रसक्तित्वादयं सत्तर्को

२२५ न भवतीत्याशयेन परिहरति—**अयमिति**। **कर्तृस्मरणादिति**। पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुकृतं दुष्कृतं च इति तदीयवाक्येनैव कर्तुरवगमादिति भावः। **अकार्यार्थत्वं समानमिति**। बुद्धादिवाक्येषु तर्कलभ्यकार्यार्थत्वप्रतिषेधकस्य पौरुषेयत्वस्य वेदेष्वपि तुल्यत्वादिति भावः। वेदेषु पौरुषेयत्वमसिद्धमिति शङ्कते—**स्मर्यमाणेति**। **सिद्धार्थेति**। पौरुषेयत्वानुमानस्य सोपाधिकत्वं वेदान्तानां कार्यार्थत्व इव सिद्धार्थत्वेऽपि सममित्यर्थः। न्यायकणिकोक्तं दर्शयति—**वर्तमानेति**। **कार्यरूपेति**। एतच्च गुरुमतेन, भट्टमते तु यागादेः स्वरूपेण प्रत्यक्षत्वेऽपि श्रेयःसाधनत्वरूपधर्मत्ववेषेणाप्रत्यक्षत्वं बोध्यम्। मा भूत्सापेक्षत्वं वेदान्तानाम्,

२२६ अनुवादकत्वं तु दुर्वारमिति शङ्कते—**नन्विति**। सोऽयमस्येति टीकाया भाष्यव्याख्यानरूपतां दर्शयति—**सर्वज्ञेति**। टीकायां फणिनमारोपितं तादात्म्येनेति भावः। **कषादित्वादिति**। कषादिषु यथाविध्यनुप्रयोगः पूर्वस्मिन् इत्यनेन सूत्रेण णमुल्प्रत्ययविधायकेषु सूत्रेषु तत्प्रकृतितया निर्दिष्टानां धातूनां मध्ये ये कषादयः तद्विषये तेषामनुप्रयोग इति

२२७ विधानादित्यर्थः। **निबन्धनमिति**। निमित्तमित्यर्थः। **अर्थवादाः किं न स्युरिति**। विधिमन्तरेण प्रमाणं किं न स्युरित्यर्थः। तथा च 'विधिना त्वेकवाक्यत्वात्—' इति सूत्रविरोध इति भावः। **व्याप्त्यभावेनेति**। यत्र वेदवाक्यत्वं तत्र सिद्धपरत्वमिति व्याप्त्यभावेन तेन न तदनुमेयमित्यर्थः। अध्ययनविधिबलेन प्रयोजनवत्त्वमात्रसिद्धावपि निषेधैकवाक्यत्वे को हेतुरित्याशङ्क्य निन्दाया निषेधशेषत्वमौचित्येन दर्शयन्नवतारयति—**रुदत इत्यादिना**। रुदतोऽश्रेर्यदश्रु शीर्णमभवदित्यर्थः। **सिद्धान्तमिति**। अर्थवादाधिकरणसिद्धान्तमित्यर्थः।

२२८ **निन्दा न भातीति**। पारलौकिकानिष्टानुबन्धित्वरूपा निन्दा न भाति। ऐहलौकिकेष्टजनवियोगप्रयुक्तरोदनाद्यनिष्टहेतुत्वं च न निन्दा तस्या रजतदानेऽपि क्वचिद्दर्शनेन तत्रातात्पर्या-

२२९ दिति भावः। जनकत्वस्य शक्तिरूपत्वादनुमानगम्यत्वमिति शङ्कते—**नन्विति**। प्रमाजनकत्वज्ञाने तदुपयोगेऽपि प्रमायां नोपयोग इति परिहारतात्पर्यमाह—**कार्यार्थापत्तीति**। कथं तर्हि भाष्ये अनुमानगम्यत्वनिषेध इत्याशङ्क्य प्रामाण्यमनुमानगम्यं न भवतीति न

भाष्यार्थः । किं त्वनुमानगम्यं स्वप्रामाण्यं भवतीति नेत्येवं भाष्यार्थ इत्याह—शास्त्रप्रामाण्यमिति । वेदान्तजन्यज्ञानस्य प्रमात्वमेव नास्तीति शङ्कते—कार्यविरहितेति । किं प्रत्यक्षेण बाधादप्रमात्वं वेदान्ता न प्रमाजनकाः सिद्धार्थवाक्यत्वादित्यनुमानेन वा ? नाद्यः तददर्शनादित्याह—सिद्धे ब्रह्मणीति । तथा चानुभवाविरोधान्न बाधप्रसक्तिरिति भावः । द्वितीयं शङ्कते— यदीति । चक्षुर्न रूपप्रत्यक्षजनकमिन्द्रियत्वाच्छ्रोत्रवदित्यप्यापत्त्या अप्रयोजको हेतुरिति । परिहरति । ननु वेदान्तानां सिद्धब्रह्मबोधकत्वाभावस्यैव पूर्वमपि पूर्वपक्षितत्वाद्-त्रापर इत्यादिभाष्यं पुनरुक्तमित्याशङ्कां निराकर्तुं टीकायामाचार्यदेशीयानां मतमुत्थापयतीत्युक्तं तत्रैपदसमासौ कल्पन्देशायरः इति देशीयप्रत्ययान्तेनाचार्यशब्देनयन्न्यूनाचार्यत्वावगमात्पूर्वत्र वासापि ब्रह्मणो वेदान्तबोध्यत्वमङ्गीकृत्य सिद्धार्थव्युत्पत्त्यनुपमर्दोपमर्दाभ्यां भेदकथनेऽप्यपि सिद्धान्तासंस्पर्शिपूर्वपक्षान्तरत्वापत्तेराचार्यदेशीयमतत्वं न स्यादित्यतः प्रकारान्तरेण भेदं दर्शयति— अथ चेति । भाष्यानुगुणमाद्यं पक्ष इत्याह— अत एवेति । ननु कार्यार्थत्वा- ३३० निश्चय इत्यनेन कार्यविषयं वाक्यं प्रमाणबोधकमिति पक्षसाध्यं निर्दिष्टं इति वक्तव्यम्, तत्र पक्षे अज्ञातसंगतित्वहेतोरभावात्स्वरूपासिद्धिरित्यत आह—अत्र कार्येति । तत्र हेतुरिति । सिद्धार्थपरं वाक्यं न ब्रह्मबोधकमिति प्रतिज्ञायामित्यर्थः । अत्र इत्यादिटीकायामप्रयोजकत्वमाशङ्क्य तात्पर्यमाह— यत्र वृद्धेति । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । पामरजनाप्रयुक्तानामपि शब्दानां संगतिग्रहदर्शनाल्लोकशब्दः प्रेक्षावत्पर इत्याह—वृद्धैरिति । सिद्धे प्रयोगाभावोऽपि तद्यापकनिवृत्तेरित्याह— प्रयोगेति । सर्वपदानां साक्षात्परम्परया च कार्याभिधायकत्वमित्येव नियमः । तत्र लिङादीनां कार्यवाचिनां साक्षात्कार्याभिधायकत्वं तदितरपदानां तु कार्यान्वितस्वस्वार्थवाचिनां परम्परयेत्याशयेन परिहरति— आशङ्क्याहेति । अपि चेत्यादिनाप्यज्ञातसंगतित्वस्यैव कथनादपि च शब्दानुपपत्तिमाशङ्क्य तस्यैव भङ्ग्यन्तरेणाभिधानात्तदुपपत्तिरित्याशयेनाह— एवमिति । न च रज्जुरित्यादिटीकायामुत्तरत्र वाच्यमित्य- ३३१ दर्शनात्प्रतीत्यभिलाप इति भ्रमं व्यावर्तयति— न च रज्जुरितीति । ननु रज्जुरियं न भुजग इति सिद्धवाक्यार्थनिश्चयादिव तत्त्वमस्यादिवाक्यार्थनिश्चयादप्यनर्थनिवृत्तिसंभवात्कथं सिद्धब्रह्मपरत्वे वेदान्तानामर्थवत्त्वाभाव इति सिद्धान्तिशङ्कानुवादे कथं यथाकथंचिदक्षणयेत्युक्तिरित्याशङ्क्य नायं सिद्धान्तिशङ्कानुवादः, किं तु ग्रन्थाद्बहिरेव कृतायाः सिद्धान्तिशङ्कायाः परिहाराय पूर्वपक्षिवाक्यमेवेदम्; तत्र च दृष्टान्तेऽपि न सिद्धमात्रपरत्वमिति दर्शयितुं टीकायां यथाकथंचिदित्युक्तमित्यभिप्रेत्य व्याचष्टे—सिद्धेति । अत एव पूर्वपक्षग्रन्थतां स्फोरयितुं न च निवृत्तिरित्युक्तम्, सिद्धान्तिग्रन्थत्वे निवृत्तिरिति न चेत्येव प्रदर्शयेदिति ध्येयम् । नियोगाविनाभावादिति । प्रयोज्यप्रयोजकवृद्धव्यवहारानुरोधिप्राथमिककार्यव्युत्पत्तिग्रहानुरोधेन तदनन्तरभाविव्यवहारे सर्वत्रापि तत्कल्पनादिति भावः । टीकायां मननादय इत्यादिपदेन निदिध्यासनं शमादयश्च गृह्यन्ते । कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं विषयत्वमित्यभिप्रेत्याह—आत्मेति । कार्यस्य नियोगादिनामकत्वप्रदर्शनमप्रस्तुतमित्याशङ्क्य प्राभाकरमता- ३३२ वलम्बनेन अत्र पूर्वपक्षः । तैश्च नियोगस्य वाक्यार्थत्वाङ्गीकारात् कुतस्त्यं कार्यस्य वाक्यार्थत्वमित्याशङ्कां निराकर्तुं तस्य नियोगाभेदप्रदर्शनमित्याशयेनाह—नन्वित्यादिना

न च विषयानुष्ठानमिति टीकायामनुष्ठानं प्रतीतिर्निष्पत्तिश्च । एवं तत्सिद्धरीत्यात्रापि एवमुत्तरत्रापि द्रष्टव्यम् । स्वविषयस्येति पदाभिप्रायमाह— **स्वप्रतीतीति** । लिङ्गा कार्यत्वेनापूर्वं बोधनीयम् । कार्यत्वं च कृतिसाध्यत्वम् । न चापूर्वं कृत्या साक्षात्साध्यत इति यागादिद्वारैव कृतिसाध्यत्वं बोधनीयमिति कार्यप्रतीत्युपाधिर्विषय इत्यर्थः । करणस्येति पदाभिप्रायमाह— **स्वनिवर्तकत्वेनेति** । शङ्कते— **कार्यमिति** । अनेन तदेव कार्यं स्वावच्छेदकज्ञाननिरूपणाय तादृशं ज्ञानविषयीभूतमात्मानमाक्षिपतीति टीका योजिता । **तर्हीति** । सर्वेषामपि वेदान्तानां कार्यपरतया सच्चिदानन्दब्रह्मस्वरूपसत्तायां तात्पर्याभावादश्रौतत्वमित्यर्थः । अनुपपद्यमानस्य विधेरेव तत्र तात्पर्यात्सिद्धमात्मनोऽपि श्रौतत्वमिति परिहरति— **विध्याक्षिप्तस्येति** । ज्ञानज्ञेययोः कृत्यसा-

२३४ ध्यत्वात्कथं विधेयत्वमिति शङ्कते— **ज्ञानस्येति** । विधेयत्वं विधिविषयत्वम्, तच्च धात्वर्थस्य कार्यघटकतया अन्यस्य तु तन्निरूपकत्वेनेति परिहरति— **इत्याशङ्क्याहेति** । कार्यं स्वावच्छेदकज्ञाननिरूपणाय ज्ञेयमाक्षिपतीत्युक्तमयुक्तम्, ज्ञेयस्य सत्ताराहित्येऽपि ज्ञाननिरूपणसंभवादिति शङ्कते— **नन्विति** । तच्छब्दस्य वेदान्तप्रसिद्धं ब्रह्मस्वरूपमर्थ इति व्याचष्टे— **ब्रह्मास्मीति ज्ञान इति** । नन्वारोपितस्यापि वागधेनुतादात्म्यादेर्निरूपकत्वं दृश्यत इत्यत आह— **न च सत्यामिति** । तत्र बाधकवशात्तथाभ्युपगमेऽपि प्रकृते न तथा अद्वैतवादे सर्वानुपपत्तिपरिहारस्य करिष्यमाणत्वादिति भावः । भाष्येऽज्ञातसंगतित्वादिहेतूनामेव प्रदर्शितत्वान्न च विषयानुष्ठानं विना तत्सिद्धिरित्यादिटीका कस्य भाष्यस्य व्याख्येत्यत आह— **इयं चेति** । प्रतिपत्तेरेव प्रतिपत्तिविधिविषयत्वात्कथं ब्रह्मणस्तद्विषयत्वमुक्तं भाष्य इत्याशङ्क्य प्रतिपत्तिद्वारा ब्रह्मणो विध्यवच्छेदकत्वात्तद्विषयत्वोक्तिरिति भाष्यभावमाह— **प्रतिपत्ति-**

२३५ **विधेरिति** । आदिशब्दार्थमाह—**तथा अपूर्वेति** । उत्पत्त्यपूर्वेत्यर्थः । गुरुमते परमापूर्वस्यैव कि(?)इष्यान्यस्य फलविधितया अन्यविधिपरेण शास्त्रेण तस्य समर्पणानभ्युपगमात् उत्पत्त्यपूर्वं तु फलविध्याक्षेपलभ्यमिति न दोष इति ध्येयम् । नन्वज्ञातसंगतित्वहेतुर्न भाष्ये दृश्यत इत्याशङ्क्य संमतिदर्शनेन सोऽपि भाष्योक्त इत्याह— **तद्भूतानामिति** । नियोज्यादिशब्दानामर्थभेदं दर्शयति— **नियोगस्येत्यादिना** । नियोगबलाभियोज्यमात्रसिद्धावपि नामृतत्वकामस्य नियोज्यत्वासिद्धिः तदश्रवणात् । ततश्च कथममृतत्वकामस्येति भाष्यमिति

२३६ शङ्कते— **अमृतत्वेति** । भाष्ये किमर्थानुपपत्तिराशङ्क्यते उतामृतत्वशब्दप्रयोगे कारणं पृच्छ्यते ? आद्येऽपि किं मोक्षस्य फलत्वे प्रमाणाभाव उत स्वर्गस्यैव फलत्वं न्याय्यमिति ? अथ वा ब्रह्मभावस्य फलत्वेऽपि कथममृतत्वस्य फलत्वमिति ? आद्यं निराकरोति—**आशङ्क्याहेति** । ब्रह्मभवनस्य नियोज्याकाङ्क्षाबाधादध्याहारेण टीकार्थमाह— **भवतीति** । **शाश्वतत्वाभिव्यक्त्यर्थमिति** । ततश्च प्रवर्तनारूपस्य विधेरेव नियोज्यविशेषाकाङ्क्षेति भावः । **निश्चितश्चेहेति** । विधिवाक्यपर्यवसानानन्तरमेव वाक्यविशेषप्रवृत्तेरिति भावः । सूत्रार्थमाह—**क्रताविति** । ततश्च क्रतावप्यत्र इव फलप्रतिपादकं वाक्यार्थवादमात्रं कार्ष्णाजिनिराचार्यो मन्यत इति सूत्रार्थः । तत्र सर्वाशद्दृष्टान्तत्वभ्रमं व्युदस्यति— **न प्रतिष्ठादीति** । **मुख्यार्थेति** । समभिव्याहृतसकलपदपर्यालोचनयैव विधिवाक्यपर्यवसानादिति

भावः । द्वितीयं निराकर्तुं पिण्डपितृयज्ञन्यायेनेति टीका । तत्र विश्वजिदुदाहरणे प्रथितो न्यायः कथं पिण्डपितृयज्ञन्यायत्वेनोक्त इत्याशङ्क्य 'यः सत्रायागुरेत स विश्वजिता यजेत' इति सत्रसंकल्पे निमित्ते विधीयमानत्वेन फलकल्पनाया अप्रसक्तेः कृत्वाचिन्तया तत्र न्यायप्रथनमित्याह—विश्वजिन्न्यायेनेति । अश्रूयमाणत्वेनेति । तेन शब्देनाप्रतीय- २३७ मानत्वात्तदसमवेत इत्यर्थः । तथापीति । जहत्स्वार्थापेक्षया अजहत्स्वार्थाया अभ्यर्हितत्वादिति भावः । पिण्डपितृयज्ञस्य स्थिरोदाहरणत्वप्रकटनाय दर्शानङ्गत्वं प्रदर्शयति—पिण्डपितृयज्ञेति । प्रकरणादङ्गत्वं व्यावर्तयितुमनारभ्याधीतेत्युक्तम् । तृतीयं शङ्कते—नन्विति । २३८ एतदमृतमभयमेतद्ब्रह्मेत्यादि श्रुत्या ब्रह्मभावामृतत्वयोरभेदावगमान्न दोष इति परिहरति—तत्राहेति । आद्यद्वितीयं निराकर्तुममृतत्वं चेत्यादिटीकेत्याह—अमृतत्वेति । अमृतत्वं च ब्रह्मभावस्य नाशाभावादेव । न च नाशानुमानमागमबाधादिति ब्रह्मभावस्य नित्यसिद्धतां प्रकटयितुं भाष्येऽमृतत्वशब्देन निर्देशः कृत इति भावः । तन्निवर्तयतीति । ततश्च भाष्ये ब्रह्मज्ञानं विधीयत इत्यत्र ज्ञानशब्द उपासनापरो द्रष्टव्य इत्युदाहरणं च तदनन्तरश्रुतनिदिध्यासितव्य इति विध्युपलक्षणत्वेनेति भावः । ननु द्रष्टव्य इत्येव विधिः किं न स्यादित्याशङ्क्य किं मुख्यार्थे विधिरुत लाक्षणिके? आद्येऽपि किं प्रत्यक्षज्ञानं मुख्योऽर्थ उतोपासना? नान्त्यः दृशेरुपलब्धिवचनत्वादित्युक्तं टीकायाम् । तदुपपादयति— द्रष्टव्य इति । 'दृशिर् प्रेक्षणे' इति स्मरणाल्लोकप्रसिद्धेश्चेति भावः । टीकायां श्रावणं न विधेयमध्ययनविधिनैव प्रापितत्वादित्युक्तम् । तत्र कथमध्ययनप्रापकस्य विधेः श्रावणज्ञानप्रापकत्वमित्यत आह—स्वाध्यायेति । कर्मधारयभ्रमं वारयति— भावनयेति । अप्रयोजकमिति । दध्यानयनस्य प्रयोजकमनुष्ठापकं न भवतीत्यर्थः । सूत्रव्याख्यानेन पूर्वपक्षमाह— तत्रेति । २३९ दध्यानयनाभिनिमित्तात्पयस उपादानकारणादित्यर्थः । आमिक्षैव प्रयोजिका स्यात् । यतः प्रधानं पय एवामिक्षेति सूत्रभागं व्याचष्टे—तत्रेति । पयसः प्राधान्ये हेतुमाह—तत्रानयतेरिति । शङ्कोत्तरत्वेन सूत्रशेषं व्याचष्टे— नन्वित्यादिना । रूपभेदेऽपीति । द्रवत्वकठिन- २४० त्वाभ्यां स्वरूपभेदेऽपीत्यर्थः । तर्हीति । रूपाभेदादिति भावः । नन्वेकत्र रूपाभेदः अपरत्र रसाभेदः ततश्च विनिगमकाभाव इत्यत आह—रूपाभेदेऽपीति । द्रष्टव्य इत्यादेर्लक्षितोपासनाविधायकत्वमपि न संभवति, तदुपलक्षितविध्यन्तरेणैव तत्सिद्धेरिति द्वितीयकल्पनिराकरणाय द्रष्टव्य इत्यादयस्त्विति टीकेति ध्येयम् । ननु टीकायां भाष्यशेषो हेतुद्वयस्य प्रपञ्चः स निगदव्याख्यात इत्युक्तम्, तदयुक्तम्; निगदव्याख्यातत्वे स्वेन पूर्वं तत्प्रपञ्चनवैफल्यादित्यत आह—हेतुद्वयेति । भाष्यतट्टीकोक्तं युक्तिद्वयं श्लोकेन संगृह्णाति—वेदान्ता इति । तत्र यद्विषया जिज्ञासेत्यादिभाष्यसूचिता युक्तिः पूर्वार्धेनोक्ता । तस्य चायमर्थः—वेदान्ता यद्युपास्तिविधिपरास्तर्ह्युपास्तेश्चोदनालक्षणत्वेन धर्मत्वाद्धर्मजिज्ञासासूत्रप्रतिज्ञाविषयतया तत्रैव मीमांसया तदर्थं प्रवृत्तेन जैमिनिनैव विचारितार्था भवेयुरिति पुनर्बादरायणेन प्रतिज्ञातं ब्रह्मजिज्ञासनं निष्फलमेव स्यात्, अतो नोपास्तिविधिपरा इति । तथा च वक्ष्यति कार्यविलक्षणानधिगतविषयत्वाभावात्स्वमते शास्त्रपृथक्त्वासिद्धिः अतस्तद्ब्रह्मेति भाष्ये वक्ष्यति । एवं च सति परिमलेऽस्या युक्तेरभ्युच्चययुक्तित्वं किमर्थमुक्तमिति चिन्त्यम् । उत्तरार्धे नाहत्योऽपि फलविशेषो यदि मोक्षः स्यात्तदा

स्वर्गादिफलैः कोऽपराधः कृत इत्यन्वयः। ननु मोक्ष उपनीचत्वादिदं मया नेष्यत इत्याशङ्क्य
२४१ क्रियाफलत्वे तदवर्जनीयमित्याह—वेदान्ता इति। फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यादिति न्यायादिति भावः। विचारितत्वोक्तिः जिज्ञासितत्वोक्तिः। भाष्ये विचारितत्वाकथनात् भोक्तव्यमिति दर्शनायेति ज्ञानेन विना पापानामत्यन्तोच्छेदे मानाभावेन तत्तदुपासनाफलभोगानन्तरं पुनरागमनश्रवणेन 'न ह वै सशरीरस्य' इत्यादिश्रुत्या च प्रबलपुण्यप्रतिबन्धपापफलमपि तदनन्तरं भोक्तव्यमेव। ततश्च मुक्तस्य पुनः संसारप्रसङ्ग इति दर्शनार्थेत्यर्थः। दानामिति। इतिशब्दो भाष्यव्याख्यानसमाप्तिद्योतनार्थः। देवदत्तेति। संसारकालीनदेवदत्तशरीरध्वंसेऽतिव्याप्तिवारणाय कालीनान्तम्। अन्यदीयशरीरप्रागभावसमानकालीनतया अव्याप्तिवारणाय देवदत्तेति। मुक्तस्य देवदत्तस्य स्वशरीरप्रागभावासमानकालीनत्वं यज्ञदत्तशरीरध्वंसोऽप्यशरीरत्वं स्यादिति द्वितीयं देवदत्तपदम्। देवदत्तापान्त्यशरीरध्वंसे तदीयचरमशरीरोत्पत्त्यनन्तरभाविनि यथोक्तलक्षणसत्त्वादतिव्याप्तिरिति तद्वारणाय शरीरे तत्प्रागभावासमानकालीनत्वं विवक्षणीयमिति परिमलोक्तं चिन्त्यम्, पूर्वपूर्वशरीराभिमाननिवृत्तिपूर्वकमेवोत्तरोत्तरशरीराभिमानेन पूर्वशरीरध्वंसानन्तरमेवोत्तरशरीरोत्पत्तेः आध्यासिकसंबन्धविशिष्टवेषेणैव शरीरध्वंसस्य विवक्षितत्वात्; अन्यथा मुक्तशरीरस्यापि कंचित्कालं परिपालनसंभवेन तस्य तावत्पर्यन्तं मुक्त्यभावप्रसङ्गात्। शरीरतत्प्रागभावासमानकालीनेति व्याख्यानेऽपि द्वित्रिदिनस्थायिचरमशरीरध्वंसानन्तरोत्पन्ने तत्रातिव्याप्तिर्ध्रौव्याच्च। ननु 'अशरीरं शरीरेषु' इत्यादिश्रुत्या शरीरकालेऽपि सद्भावप्रतिपादनात्कथं ध्वंसात्मकं शरीरत्वमित्यत स्वाभिप्रायमाह—
२४३ सर्वोपाधीति। टीकायामुपासनासंस्कारवदित्यारभ्य शङ्का। तस्याः फलं दर्शयन्नाह—उपासनापूर्वमपीति। कारीर्यादीति। शुष्यत्सस्यसंजीवनकामस्यैव तत्राधिकारादिति भावः। आदिपदेन 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं ज्योगामयावी' इत्यादिवाक्यविहितानि दीर्घरोगनिवृत्तिफलकानि कर्माणि गृह्यन्ते। अमृतत्वकामेनाप्यन्यनियोज्यकापूर्वावगतौ
२४४ बाधकाभावाट्टीकायां कार्यमिति विधेयपरमित्याह— तदपूर्वमिति। नार्हतीति। कामिकाम्यादन्यत्काम्याव्यवहितसाधनतया ज्ञातमेव कर्तव्यतया जानातीति नियमादिति भावः। नेहेति। एतेन ब्रह्मभूयादन्यन्नियमापूर्वसाध्यममृतत्वं न च किंचिदस्तीति टीका योजिता। यद्यप्युत्पत्त्यपूर्वमेव नियमापूर्वसाध्यं तथापि नियमापूर्वापेक्षया परमत्वं बोध्यम्। गुरुमतेन वा तदुक्तिः, तन्मते परमापूर्वस्य तत्साध्यत्वादिति ध्येयम्। विश्वजिन्न्यायं गुरुमतेन
२४५ दर्शयति— विश्वजितेति। छिन्नप्रकरणेत्यादिविशेषणप्रयोजनमाह— निषेधे हीति। गुरुमते न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणाभावविषयकं कार्यमित्यर्थः। तत्र च नियोज्याकाङ्क्षायां कलञ्जभक्षणं यः प्रविवृत्सति स एव सामर्थ्याल्लभ्यते भक्षणोन्मुखं प्रत्येव तदभावकर्तव्यताबोधनादिति भावः। इह तु विषयेणेति नियोगस्य कृतिसाध्यत्वप्रतीतिनिर्वाहको विषय एव न तु नियोज्योऽपि कृतितत्साध्यमध्यवर्तिन एव तथात्वात् अध्ययननियोगादेस्तेन विनापि प्रतीतेश्चेति भावः। अत्रापीति। अभिधेयस्य कृतिसाध्यत्वस्य कृतिकर्तारमन्तरेणापर्यवसाने
२४६ तदभिधानमपि न निर्व्यूढमित्यर्थः। तदेव दर्शयति—कार्ये हीति। तमन्तर्भाव्येति। अध्ययननियोगादेरपि माणवकादिनियोज्यलाभेनैव प्रतीतिपर्यवसानं परं त्वाचार्यत्वकामनियो-

ज्यकाध्यापनविधिमहिम्नैव स लभ्यत इति न तत्र तत्कल्पनेति भावः। नन्वेवं कर्तुराव-श्यिकत्वेऽपि तस्य नियोज्यत्वं कथमित्यत आह— न चासाविति। कर्तव्यत्वेन ज्ञात्वा तद्विषयानुष्ठानेन तदुत्पत्तावेव तेन संबन्धादिति भावः। किं सर्वेषामिति। सर्वफलका-मानामित्यर्थः। फलकामिन एव यथोक्तनियोज्यत्वसंभवेन तदन्यस्य तन्त्रप्रसक्त्यभावात्। ननु दुःखनिवृत्तेरपि सर्वाभिलषितत्वात्तत्कामः किमिति नाध्याह्रियत इत्यत आह—दुःखा-निवृत्तेरपीति। सुखकाले दुःखाभावेन सुखस्य दुःखाभावाविनाभूततया तत्सिद्धौ दुःखा-भावसिद्धेरवर्जनीयत्वादिति भावः। न च वैपरीत्यमित्याह—दुःखेति। पुत्रपश्वादिसुखा-र्थिनामपि संभवात्कथं विशेष इत्याशङ्कां निराकर्तुं सर्वांन्प्रतीति सूत्रे हेतुरुक्तः। तं सोपपत्तिकं व्याचष्टे— अनवच्छिन्नसुखेति। अतो विशेषग्रहणे मानाभावात्सर्वविशेषसाधारणस्वर्ग एव नियोज्यविशेषणमित्याह— विशेषे चेति। आगुरणेति। सत्यं संकल्प्य दैवान्मानुषाद्वा २४७ अपराधात्तत्त्यागेन तत्संकल्पोपरम इत्यर्थः। नन्वत एवेत्यादिभाष्यस्यानुमानरूपन्यायप्रदर्श-कत्वमुक्तं यत्किलेत्यादिटीकायाम्, तदनुपपन्नम्, अशरीरत्वस्य मोक्षस्य चैतन्यदृष्टान्तेन नित्यत्वसाधने तयोर्भेदापत्तेरित्याशङ्क्य स्वरूपातिरिक्तवियानिवृत्तिरशरीरत्वमिति पक्षाभिप्रायेण टीका प्रवृत्ता। स्वरूपमेवेति पक्षे तु व्याख्यात एव भाष्योक्तो न्याय इत्यभिप्रेत्याह—स्वाभा- २४८ विकेति। विशेषणमिति। कूटस्थनित्यमित्यत्र कूटस्थेति विशेषणमित्यर्थः। परिणामि-नित्यतानिराकरणस्य संगतिमाह— इदं त्विति। सर्वात्मना परिणामपक्षे तद्भावव्याघात-मुपपादयन्नवतारयति— परिणामो हीति। तर्ह्येकदेश एव परिणामिनि नित्योऽस्त्वित्यत आह—स चानित्य इति। एकदेशस्य धर्म्यभिन्नस्य सर्वात्मना परिणामे प्रथमकल्पोक्तो दोष २४९ इत्याह— नश्यतश्चेति। भेदाभेदाङ्गीकारेऽपि कथमनित्यत्वपरिहार इत्यतस्तात्पर्यं दर्शयन्न-वतारयति— पक्षद्वयेति। विपर्ययशब्दस्य विरोधार्थकत्वं दर्शयन्वाक्यार्थमाह— यत्प्रमा-णेति। प्रमाणमाहेति। अर्थापत्तिमित्यर्थः। तत्प्रत्यक्षस्य विप्रतिपन्नत्वात्तथा हीत्यादि। तथा हीत्यादिटीकाया अर्थापत्तेरेव प्रदर्शनाच्च। एवं च सामानाधिकरण्यप्रत्यये पर्यालोच्यमान इति टीका योज्या। कुण्डले हेमाभेदे हेम्नि कुण्डलाभेदे कुण्डलस्य वस्तुनो हेमत्व-कुण्डलत्वाभ्यां द्विरवभासप्रसङ्ग इत्यापादनमित्याशङ्क्य सर्वात्मना भेदाभावे हेमकुण्डल-शब्दयोः पर्यायत्वापत्त्या हेमत्वकुण्डलत्वयोरप्यभेदे हेम कुण्डलमिति सामानाधिकरण्यप्रत्ययो हेम हेमेत्येवंरूपः कुण्डलं कुण्डलमित्येवंरूपो वा स्यादित्याशयमाह—हेम हेमेति। अभेदा-सिद्धिशङ्कोत्तरत्वेन टीकां व्याख्यातुं पर्यवसितमर्थमाह—अपर्यायेति। किं हेमत्वकुण्डलत्वयो-रुभयोरपि धर्मिणा सहाधाराधेयभावः सामानाधिकरण्यप्रयोजक उत हेमत्वमात्रस्य? नाद्यः, हेम्नः कुण्डलावस्थातिरिक्तकुण्डलव्यक्तेरभावेन कुण्डलत्वजात्यसिद्धेरित्यभिप्रेत्य टीकायाः परम-कारणपरतामाह— लोक इति। भावरूप इति पक्षेऽपि स किमभेदविरुद्ध उत न? प्रथमे भावाभावत्वपक्षे वक्ष्यमाणमेव दूषणं भविष्यतीत्यभिप्रेत्य द्वितीयं दूषयति—ऐकान्तिकेति। २५१ रूपरसयोरिव तयोरेकत्र संभवादिति भावः। द्वितीयमाशङ्क्याह— परस्पराभाव इति चेदिति पूर्वग्रन्थेनाशङ्क्येत्यर्थः। टीकायां भावाभावयोर्विरोधेऽन्यतरस्यैव भागित्वं स्यादित्युक्त्वा तयो-रविरोधे कटकशरावयोरपि भिन्नयोस्तत्त्वेनाभेदः स्यादित्युक्तम्, तदयुक्तम्, सत्कारणा-

भेदस्य तात्त्विकस्यैवाभ्युपगमादित्यत आह— **कटकत्वेति** । विशिष्य कटकाभेदापादने को हेतुरित्याशङ्क्य कार्यभेदो न स्यादित्यत्र पर्यवसानमिति सूचयन्नुत्तरटीकामवतारयति— २५२ **कार्यस्येति** । तथा चेत्यनेन हाटकाभेदमात्रपरामर्शे कटकाद्यात्मना भेदसत्त्वेन भेदस्याप्रतिभावनादित्यसंगतं स्यात्; अतः कृत्स्नयुक्तिपरामर्शित्वमाह— **एवमेकेति** । भेदाभेदयोरवच्छेदकभेदेन सत्त्वाभ्युपगमान्न विरोधः कटकत्वादेरभेदानवच्छेदकत्वाभिकायोपपत्तिश्चेति शङ्कातात्पर्यमाह— **कटकस्य हीति** । ननु तदभिन्नाभिन्नस्य तदभिन्नत्वमावश्यकमिति पूर्वमुक्तत्वात्कथं शङ्का कथं वा हाटकमेव वस्तुसदित्युक्त्या कटकादीनामवास्तवत्वाभिधानाद्रूपान्तरत्वादिति हेतुरित्यत उक्तं प्रस्तुतपराभिसंधिः स्वप्रक्रिययेति । किं कटकस्य हाटकमेव स्वरूपमनुपादानव्यतिरेकेण वस्तुतः कार्यस्याभावात्; ततश्च कुण्डलादिषु हाटकानुवृत्त्या तदभिन्नस्य कटकस्यानुवृत्तिरभ्युपगम्यते किं वा हाटकाद्वस्त्वन्तरमेव कटकमित्याश्रित्य नास्ति कुण्डलादिष्वनुवृत्तिरित्युच्यते? आद्ये प्रागुक्तदोषतादवस्थ्यमित्याह— **क्षिप्ता-** २५३ **न्तौ त्विति** । द्वितीये कटकस्य हाटकाभेदोऽपि न स्यादित्याह— **कटकस्येति** । उपनयकथनसामर्थ्यादेव तस्मिन्ननुवर्तमानत्वे सति व्यावृत्तत्वं हेतुरुक्त इत्याह— **अर्थात्त्विति** । न केवलं हेमाद्येकोपादानकानां कार्याणामेकत्वापत्त्या व्यवहारसंकरः, किं तु सदुपादानकस्य कृत्स्नस्यापि जगत इति वक्तुं सदानुवृत्त्येति टीका । तत्र सहानुवृत्तिमात्रेण नानुगमः घटादिष्वाकाशानुवृत्तावपि तदर्शनादित्यतस्तात्पर्यमाह— **कुण्डलादिष्विति** । तादात्म्येनानुवृत्तिर्विवक्षितेति न दोष इति भावः । क्वचिदेव कदाचिदेव कथंचिदेवेत्येवं व्यवस्थाहेतोः कस्यचिदभावादिति टीकाया द्वितीयाव्यवस्थायां हेतुर्नोक्त २५४ इत्यत आह— **कुतश्चिदित्यपीति** । ननु स्वमतेऽपि कार्यकारणाभेदाभ्युपगमात्कथमपि चेत्यादिटीकेत्यत आह— **इतश्चेति** । कारणव्यतिरेकेण कार्यं नास्तीत्येवंरूपः कार्यकारणाभेदः सिद्धान्ते कारणव्यतिरेकेण कार्यसत्तामङ्गीकृत्य तयोरभेदं येऽभ्यन्यन्त तन्मते दूषणमुच्यत इत्यर्थः । अत एव कनके ज्ञातेऽपि तद्भिन्नत्वेन कल्पितानां कुण्डलादीनामज्ञातत्वात्स्वमते जिज्ञासोपपत्तिः, परमते तु भिन्नानामपि तेषां कनकनिश्चयेन निश्चितत्वात्तदनुपपत्तिरित्यभिप्रायेणाह— **निश्चितेति** । ननु प्रत्युतेत्यादिटीका न युक्ता, कनकनिर्णयेन कटकादनिर्णये तदभेदः कारणमितिवत्तदनिर्णये तद्भेदः कारणमित्यपि सुवचत्वात्; न चानिर्णये निर्णयाभावे भेदस्य कारणत्वकल्पने गौरवमिति वाच्यम्, त्वन्मतेऽपि निर्णये अभेदस्य भेदाभावस्य कारणत्वकल्पनाया गौरवसत्त्वेन साम्यादित्याशङ्क्य, नाभेदो भेदाभावः, किं त्वैक्यमेव, तदभाव एव तु भेदः, २५५ तस्य भावरूपत्वायोगात्; तथा च नाविनिगम इत्याशयमाह— **हेमनिर्णयेनेति** । किं सामानाधिकरण्यानुपपत्त्या भेदाभेदावभ्युपगन्तव्याविति ब्रवीषि अथ वा सामानाधिकरण्यस्य गतिं पृच्छसीति विकल्प्य प्रथमं निराकर्तुमथेति टीका । तया किमपि दूषणं नोक्तमित्यतस्तात्पर्यमाह— **यदि हेम्न इति** । **मिथो विरोधेति** । कुण्डलादिषु हेमाभिन्नत्वस्य तस्मिन्ननुवर्तमाने व्यावृत्तत्वम्, तस्मिन्निश्चिते संदिग्धत्वमित्येवंरूपधर्मद्वयस्य च मिथो विरोधेत्यर्थः । उपपादि घटिष्येत्यनयोर्लुङन्तयोर्माङ्योगादडागमाभावः । ते व्यवस्थाजिज्ञासे । द्वितीयं निरा- २५६ कर्तुं तस्मादिति टीकेत्याह— **एवं निरुद्ध इति** । **सौगतमतमिति** । यद्यपि सौगतमते

कार्यकारणभेदो नास्ति परमाणुपुञ्जातिरिक्तकार्यस्यैवानभ्युपगमात्, तथापि तदेकदेशिमतं गौतममतसदृशमस्तीति तदभिप्रायेणेदं द्रष्टव्यम् । भिद्यमानतन्त्रत्वादियुक्तेरेकाभावे चेत्यादि-युक्तेश्च भेदाभावात्पौनरुक्त्यमित्याशङ्क्य मतभेदेन तदुभयमित्याह— **भेदः किं धर्मीति** । २५६ अधिकरणेत्यर्थः । ततश्च भेदं प्रत्युपजीव्यत्वात्राभेदस्य तत्र कल्पितत्वमित्याह— **तत इति** । मृत्तिकेत्यादिश्रुतेः कथमभेदसत्यतापरत्वमित्याशङ्क्य पर्यवसानगत्येत्याह— **मृत्तिकेति** २५७ **श्रुतिरिति** । नन्वनंशेऽप्यात्मनि कर्मजन्यातिशयो दृश्यत इत्यत आह— **अनंशत्व-मिति** । आकारभेदो धर्मभेदः । **श्रुत्युक्तानीति** । आप्तकाम इत्यादिश्रुत्युक्तानीत्यर्थः । शास्त्रानारम्भदूषणं नास्मन्मत इति वक्तुं तद्ग्रन्थेत्यादिभाष्यमित्याह— **कार्येति** । टीकायाम्— तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य क्रियानिष्पाद्यस्य तु मोक्षस्यानित्यत्वं प्रसञ्जयति— **तद्यदीति** । न चागमबाधः, आगमस्योक्तेन प्रकारेणोपपत्तेः । अपि च ज्ञानज-न्यपूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयसः श्रुतयो निवारिका इत्याहेति केषु-चित्पुस्तकेषु पाठो दृश्यते । अन्यत्र तु तदेवं स्वमतेन मोक्षाख्यं फलं नित्यं श्रुत्यादिभिरुपपाद्य ज्ञानजन्यापूर्वजनितो मोक्षो नैयोगिक इत्यस्यार्थस्य सन्ति भूयसः श्रुतयो निवारिका इत्याहेति पाठः । तत्र पूर्वस्मिन्पाठे न चागमबाध इति टीकाया अयमर्थः । न च मोक्षस्य कृतकत्वेना-नित्यत्वप्रसञ्जने तन्नित्यत्वप्रतिपादकश्रुतिविरोधः वेदान्तानां सिद्धब्रह्मपरत्वमेव न विधिपरत्वं विधेयालाभादिति प्रागुक्तप्रकारेणैवोपपत्तौ प्रतिपत्तिविधिपरत्वाश्रयणेन निरुपाधिकन्यायबाधक-त्वकल्पनायोगादिति द्वितीयपाठमाश्रित्य पूर्वोत्तरयुक्त्योर्भेदं प्रकटीकुर्वन्व्याचष्टे— **प्रागिति** । उपपाद्येत्यस्य निवारिका इत्यव्यवहितायां निवारणक्रियायां नान्वयः मोक्षनित्यत्वप्रतिपादिकानां मोक्षस्य नैयोगिकत्वनिवारिकाणां च श्रुतीनां भिन्नानामेवोदाहृततया निवारकश्रुतिभिरुपपादना-करणेन त्वयनुपपत्तेः, किं तु इत्याहेति वचनक्रियायामन्वयः ; एवं च सत्युभयत्रापि भाष्यका-रस्यैव कर्तृत्वेन त्वयुपपत्तिरित्याशयेनाह— **फलस्वभावेनेति** । मोक्षस्य नित्यत्वाभियोगा- २५८ योगः प्रथममुक्तः अपि चेत्यादिनापि ज्ञानाधीनस्यापि मोक्षस्य कण्ठचामीकरवत्प्राप्तप्राप्तिरूपत्वेन सिद्धत्वान्नियोगायोग उक्त इति पूर्वभाष्ये फलस्वाभाव्येनैव नियोगायोग उक्त इत्यर्थः । **फलविघ्नेनेति** । ज्ञानस्य समानविषयकाविद्यानिवर्तनस्वभावत्वादिति भावः । ज्ञानस्य नान्याधीनं मोक्षसाधनत्वम्, किं तु स्वत एव, अतो न स्वत इति टीकानुपपत्तिरित्यतः स्वतः-शब्दार्थमाह— **विहितेति** । टीकायाम्— आचिनोतीति । गूढं शास्त्रार्थं प्रकटीकरोती-त्यर्थः । तदनन्तरापायादिति पञ्चमीलब्धमर्थं प्रकटयति टीकायाम्— सत इति । अविद्या-निवृत्त्या दुःखान्तेन स्वविलासेन सहाविद्यानिवृत्तेरित्यर्थः । मिथ्याज्ञानमेवाह टीकायाम्— भेदावभासमिति । यथा वृत्त्यनन्तत्वेनेत्यादिटीकायाम् 'अनन्तं वै मनः' इति श्रुत्युक्तमनन्त-त्वमनन्तवृत्तिकत्वेनेत्युक्ता मन आलम्बनामित्यादिना संवादनं व्याख्यातम् ; तत्र प्रयोजनमाह— **आरोप्यत्वसाम्येऽपीति** । ननु संवरणोपमनयोर्भेदात्कथं व्याख्यानमित्यतो लक्षणाबीजं २६० संबन्धमाह— **यो हीति** । **स्वाप इति** । अथाध्यात्मम् प्राणो वाव संवर्गः स यदा २६१ स्वपिति प्राणमेव वागप्येति इत्यादिश्रुतेरित्यर्थः । न्यायसाम्येऽपि श्रुतपरित्यागे किं कारणमि-त्यत आह— **लयस्य चेति** । ननु वाय्वादीनां चक्षुरादीनां चतुर्णां प्राणे च वागादीनां चतुर्णां

संवर्गप्रतिपादनेन वायुप्राणाभ्यां सह दशसंख्यासंपत्तिः ते वा एते पञ्चान्ये पञ्चान्ये दश सन्त-स्तत्कृतमिति श्रुतौ कीर्तिता; ततश्च कथं दशाशागतं जगद्दर्शयतीति टीकेत्याशङ्क्य तदनन्तर-वाक्यशेषे सर्वान्नादित्वरूपसार्वात्म्यप्रतिपादनात्सर्वद्रष्टृत्वप्रतिपादनाच्च श्रुतावग्न्यादिग्रहणं सकल-जगदुपलक्षणार्थमित्याशयमाह— अग्न्यादेरिति। यथा वायुरित्युपक्रमात्पुनरपि यथाशब्दो नान्वेतुमर्हतीत्यत आह— संवर्गेति। उपासनाविधिशङ्कावसरे दर्शनस्य प्रधानकर्मत्वकथन-

२६२ मसंगतमित्यत आह— एतश्चेति। अनेन आत्मज्ञानमात्मोपासना मनआद्युपासना च प्रधा-नकर्माणि यतः ततस्तस्मात्कारणादेतेषु त्रिष्वपि संनिपत्योपकारकक्रियाविशेषप्रयोगनिमित्तकत्वपक्षेप्वात्मो-पासनाः प्रधानकर्माणीति टीका योजिता। स्तुतिश्चेति। तात्पर्येण गुणाभिधानं स्तुतिरि-त्यर्थः। नन्ववेक्षणस्य गुणकर्मत्वे किं प्रमाणमित्याशङ्क्य निष्ठाप्रत्ययाभिहितकर्मकारकं प्रति धात्वर्थस्यावेक्षणस्य गुणत्वं श्रुत्यैवावगम्यत इत्याह— अवेक्षितमिति। पूषानुमन्त्रणेति। पूषदेवताकयागानुमन्त्रणमन्त्रवदित्यर्थः। ग्रहणे हेतुमाहेति। तथा च तत्र तादृशस्यानुम-न्त्रयितव्यस्य यागस्याभावात्पूष्णोऽहं देवयज्ययेति मन्त्रस्य पूषदेवताके कर्मण्युत्कर्षेऽपि प्रकृते अवेक्षणसंस्कार्यस्याज्यस्य लाभात् प्रकरणान्वयो युक्त इत्यर्थः। ननु प्रधानाङ्गभूतेति वक्तव्ये कथमुपांशुयाजाङ्गभूतेति टीका सर्वस्मैवाक्येन पत्न्यवेक्षितस्यैवाज्यस्य ध्रौवाज्यमुखेन सर्वार्थ-

२६३ त्वावगमादित्यत आह— सर्वस्मै वा इति। नन्वेवमप्युपांशुयाजग्रहणमयुक्तम्, अवेक्षणा-दिसंस्काराणामङ्गप्रधानार्थत्वव्यवस्थापनेन तदङ्गभूताज्यद्रव्यसंस्कारत्वस्यापि सत्त्वादित्याशङ्क्य, सत्यमेवं तथापि ग्राहकग्रहणार्थमुपयोगमात्रं वक्तव्यमिति प्रधानभूतोपांशुयाजग्रहणमित्याशये-नाह— सत्यपीति। न प्रधानहविष्ट्वमितीति। आज्यभागाद्यङ्गेषु निवेशे सत्यपि तद-र्थाज्यस्य प्रधानहविष्ट्वाभावेन प्रधानहविर्भूतमुपांशुयाजाज्यमेव टीकायामुपलक्षणतया निर्दिष्ट-मित्यर्थः। ननु क्रतुसंबन्धित्वेनानवगतस्य हिरण्यस्य कथं भरणसंस्कारविधिरित्याशङ्क्य भार्य-

२६५ मिति कृत्यप्रत्ययमहिम्नावगतसंस्कार्यत्वबलादेव विनियोगकल्पनमित्याशयेनाह—तथा चेति। सूत्रार्थमाह— अद्रव्यत्वादिति। द्रव्यदेवतासंबन्धशालिनो यागादेरेव प्रायेण स्वतन्त्रकर्म-त्वावगमादेवंजातीयकानां स्वरसतो गुणकर्मत्वमेवेत्यर्थः। अथ वा हिरण्यभरणोदाहरणपूर्वपक्ष-सूत्रं द्रव्यपरत्वाचेत्यनन्तरसूत्रमेव इदं तु विष्णुर्वेष्व्य इत्येवमाद्युदाहरणपूर्वपक्षसूत्रम्; तथा च द्रव्यपदेन देवताया अप्युपलक्षणं न कर्तव्यं भवतीति ध्येयम्। ननु हिरण्यस्य श्रुतभरणसं-स्कार्यत्वान्यथानुपपत्त्यैव वैदिके कर्मणि विनियोगः कल्प्यताम्, एवं च सति फलविपरिणामक्लेशो विशिष्टविधिगौरवं च न भविष्यति। हिरण्येन षोडशिनः स्तोत्रमुपकरोति हिरण्यमालिनः प्रचरन्ति इत्यादिवाक्यविहितस्य हिरण्यस्य धारणमप्यर्थप्राप्तमेवेति विधिवैयर्थ्यमिति वाच्यम्, यत्र विहितस्यापि हिरण्यस्य धारणं नित्यप्राप्तं यथा सहिरण्यैः पाणिभिः सोममाप्याययन्ती-त्यादौ, तत्र हि सोमाप्यायनकालमात्रधारणेनाप्युपपत्तौ न सदा धारणं प्राप्तमिति तद्विषयो विधिर्भवेदित्याशङ्क्य कृत्यप्रत्ययस्य साध्यत्वमात्रबोधनसामर्थ्येऽपि संस्कार्यत्वबोधने सामर्थ्या-भावाद्धिरण्यस्य क्रत्वन्वयबलात्तथा कल्पने परस्पराश्रयापत्तेर्हिरण्योद्देशेन भरणविधौ सुवर्णश्रुति-वैयर्थ्यापत्तेस्तस्यापि विधौ वाक्यभेदापत्तेश्च विशिष्टमेव भरणमार्थवादिकफलाय विधीयत इति

२६७ सिद्धान्तयुक्तिमुपसंहारव्याजेनाह—तस्मादिति। यथा वार्त्तिकमेव सूत्रं पठित्वा हिरण्यभर-

णाधिकरणानुक्रमणाद्दार्ष्टान्तिके आत्मसाधनकदर्शने गुरुमतानुरोधेनापूर्वविषयत्वकथनमसंगतमित्यतो व्याचष्टे— **अपूर्वे विषय इति** । टीकायाम्— शान्तिकर्मणीति । साधारणपिशाचनिवृत्त्यर्थं क्रियमाणे शान्तिकर्मणि प्रबलवेतालोदयवादिक्रियाविषयत्वेन ब्रह्मणो विधेयत्वनिषेधाय विषयत्वमेव निराकुर्वतः शास्त्रप्रमाणकत्वभङ्ग एव प्राप्त इत्यर्थः । वाक्यार्थस्याहृत्यशब्दानभिधेयत्वमुपपादयति— **सामान्येति** । **वस्तुगतेति** । गोशब्दाभिधेयगोत्वतादात्म्येन व्यक्तिविशेषलक्षणादित्यर्थः । भाष्ये यदित्रादिशब्दप्रयोगात्त्वंपदार्थौ इति टीकाया भिन्नार्थकत्वभ्रमं व्यावर्तयन्नाह— **प्रत्यक्त्वेनेति** । प्रमातृत्वादेरयानर्थहेतुत्वात्तथा व्याख्यानमिति भावः । तदस्येति टीकायां तदित्यव्ययं सप्तम्यर्थ इत्याशयेनाह— **तत्र सतीति** । अविद्याविलसितत्वे सतीत्यर्थः । तत्पदार्थस्य प्रत्यगात्मत्वाभावात्तत्पदार्थप्रत्यगात्मनोरिति व्याचष्टे— **अविषयेति** । **तन्निवृत्ताविति** । तच्छब्देन पूर्ववाक्ये अविद्याविलसितत्वेन २६८ निर्दिष्टो वाक्यार्थः परामृश्यत इत्याशयेनाह— **प्रमित्यादि** । त्रय इति । प्रमाणप्रमेयप्रमितय इत्यर्थः । ननु तत्पदार्थप्रत्यगात्मनोः कथं तत्त्वमसीति सामानाधिकरण्यम् एकार्थत्वाभावादित्याशङ्क्य परस्परसमभिव्याहारेण लक्षितस्वरूपपरतया सामानाधिकरण्यनिर्वाह इति वक्तुं तथा हीत्यादिटीका तत्र विगलितपराग्वृत्त्यर्थकत्वं तत्पदस्य त्वंपदैकार्थ्याभावेऽपि स्वत एव लभ्यते, ब्रह्मणः परागर्थत्वाभावात् । ततश्च तदिति टीकानुपपत्तिरित्याशङ्क्य विगलितपराग्वृत्तित्वेन प्रत्यक्लक्षणान्न दोष इति व्याचष्टे— **विगलितेति** । **ऐकार्थ्यस्यैव व्याख्येति** । ष्यञ्प्रत्ययस्य स्वार्थिकत्वाद्विशुद्धचिदात्मतामेकमर्थं गतेत्यन्वय इति भावः । **मध्यश्लोक इति** । भामतीमौक्तिकहारस्य नायकमणिरित्यर्थः । तद्यदि कर्तव्यशेषत्वेनेत्यादिभाष्येणैव मोक्षस्यानित्यत्वप्रसञ्जनात्पौनरुक्त्यमाशङ्क्याह— **साध्यश्चेदिति** । अनित्यत्वं स्थापयितु- २६९ **मिति** । संस्कारविशिष्टवेषणापि नानित्यत्वमिति दर्शयितुमित्यर्थः । भाष्ये कायस्य वाचिकत्वादिकमुक्तम्, तद्वागादिभवक्रियाजन्यत्वादौपचारिकं स्वतो वागादिधर्मत्वाभावादित्याशयेन टीकायामुक्तम् । वागादिव्यापारेति । मतभेदप्रदर्शनेन पक्षद्वयं प्रकटयति टीकायाम्— क्षणिकं विज्ञानमिति । स्तबका गुच्छाः । **पोतेन दीव्यन्तीति** । 'तेन दीव्यति' इति ठक्प्रत्यय इति २७० भावः । **भिन्नाभिन्नविकल्पाभ्यामिति** । अभेदे नित्यत्वापत्तिरनिष्टेयत्वम्, भेदे धर्मधर्मिभावानुपपत्तिरित्येवं निरसनीय इत्यर्थः । वास्तवत्वपक्षमवलम्ब्य भेदेऽपि दर्पणतन्मालिन्ययोरिव धर्मधर्मिभावो युज्यत इत्यभिप्रेत्य शङ्कत्याशयेनाह— **शङ्कतुरिति** । मुक्तदशायामेव श्रुतिबोधितं शुद्धत्वं न संसारदशायाम्; तथा च नित्यशुद्धत्वमसिद्धमिति परिहरति— **अत आहेति** । अशुद्धेरवास्तवत्वान्नित्यशुद्धमेव भवतीति वक्तुं नाविद्येति टीका । तत्र ब्रह्माऽनाश्रयत्वे । **किं तु जीव इति** । **अध्यासभाष्य इति** । भवतीति शेषः । तर्हि किमाश्रयेत्यत आह— तर्हि किमाश्रयेत्यत आह— ननु तर्हि जीवगताविद्यानिरसनार्थमेव क्रियापेक्षाटीकावाक्यार्थकथनरूपत्वादस्य वाक्यस्य । ननु तर्हि जीवगताविद्यानिरसनार्थमेव क्रियापेक्षास्त्वित्याशङ्कां निराकर्तुमनिवचनीयेति पदसूचितमर्थमाह— **तथाविधा चेति** । किंच तथा दर्शनादिति भावः । एवं टीकायां नेति भाष्याभिप्रायमुक्त्वा क्रियाश्रयत्वानुपपत्तेरिति भाष्यमभ्युपेत्यवाद इत्युक्त्वा यदाश्रया क्रियेत्यादिभाष्यं विकल्पमुखेन व्याख्यानम् । तत्र संयोगविभागादिरूपैकफलानिच्छव्यापारानन्तरमेव भान्त्यर्थतया कथं संयोगविभागयोरेव पुनिभान्त्यर्थत्वेन

वर्णनमित्याशङ्क्य फलमेव धात्वर्थ इति मण्डनमिश्रमतानुरोधेनैतदुक्तेस्तन्मते च विक्लित्तेः पचि-
२७१ धात्वर्थत्ववत्संयोगविभागयोर्घृपिधात्वर्थत्वान्न दोष इत्याशयेनाह— एतच्चेति। उपास्तिक्रिया नात्मगतोपकारजनिका, तदसमवेतक्रियात्वात्, या क्रिया यदसमवेता सा न तद्गतोपकारजनिका, यथा मण्यसमवेता दर्पणघर्षणक्रियेत्यत्र क्रियात्वं सन्दत्वं कृतित्वं वा कुतो न भवेदित्याशङ्क्य व्यभिचारापत्तेर्नैवमित्याह— यद्यपीत्यादिना। धात्वर्थद्वारेति। तथा च सन्दादौ धात्वर्थत्वरूपक्रियात्वाभावान्न व्यभिचार इति भावः। आत्मन्यपि संयोगविभागरूपक्रियासंभवे हेतोरसिद्धिरित्याह— तौ च नात्मनीति। असङ्गत्वश्रुतेरिति भावः। एकफलावच्छिन्नव्यापारनिचयो धात्वर्थ इति मते कथं व्यभिचारपरिहार इत्याशङ्क्य तस्मिन्पक्षे तत्समवेतफलाजनकक्रियात्वं हेतुरिति न दोष इत्याशयेनाह— संयोगेति। संयोगविभागातिरिक्तस्तत्फलको व्यापारो घृपिधात्वर्थ इति पक्षेऽपि दूषणमिदं समानमित्यर्थः। तथानिष्टमिति भाष्ये तच्छब्देनानित्यत्वपरामर्शे अनिष्टमित्यसंगतम्, स्वरूपेण नित्यत्वेऽपि संस्कारविशिष्टवेषेणानित्यत्वमस्त्विति वदन्तं प्रत्येवाविकार्यत्वश्रुत्युपन्यासादित्याशङ्क्य टीकायां बाधनं परामृ-
२७२ श्यत इत्युक्तम्। तत्र हेतुमाह— तदव्यवहितमिति। अथ वा अनित्यत्वपरामर्शे वा बाधनपरामर्शे वा विशेषाभावात्किमर्थं व्याख्यायत इत्याशङ्क्य न्यायं पुरस्कृत्येत्याशयेन न्यायं दर्शयति—तदव्यवहितमिति। स्वत एवेति। ततश्च शुद्धस्यैव संस्कार्यत्वे व्यभिचारतादवस्थ्यमिति भावः। असङ्गोदासीनब्रह्मस्वभावस्य जीवस्वरूपस्य स्वतःसंस्कार्यत्वासंभवादुपहितस्यैव संस्कार्यत्वमिति परिहरति—आहेति। तादृशस्यापि जीवस्य व्यवहाराय शरीराद्यपेक्षेत्याह— नन्वित्यादिना। ननु यज्ञदत्तस्यापि देवदत्तशरीरसंयोगे तेन व्यवहारापत्तिः तत्संहतत्वात् अत आह—संहतत्वमपीति। नन्वेवमन्तर्यामिणोऽपि तत्प्रविष्टस्य तेन व्यवहारापत्तिः; अत आह—प्रवेशोऽपीति। ननु स्नानादिक्रियाया आत्मन्यारोपेऽपि वस्तुतस्तदसमवेतत्वाद्व्यभिचारतादवस्थ्यमित्याशङ्क्य येन संबन्धेनोपकारो जन्यते तेन संबन्धेन क्रियाया अपि तद्गतत्वं विवक्षणीयम्, अन्यथातिप्रसङ्गात्; ततश्च स्नानादिक्रियातत्संस्कारयोरुभयोरप्यात्मनि कल्पितत्वेन क्रियाया उपकारसमानसंबन्धेन तत्समवेततया तदसमवेतत्व-
२७३ घटितहेतोरेवाभावान्न व्यभिचार इति टीकाभिप्रायमाह— देहादाविति। रूप्याद्यध्यासवदेवलक्ष्यप्येनेति। स्नानादिसंस्कारो न स्थायिफलजनकः आरोपितत्वात् शुक्तिरूप्यवदित्यत्र प्रातीतिकत्वमुपाधिरिति भावः। नन्वीशावास्यभाष्ये स्नायुशब्दात्स्नाविरशब्दनिष्पत्तिमाश्रित्य सिरारहितमिति व्याख्यातत्वात्कथमविगलितमिति व्याख्येत्याशङ्क्य प्रकारान्तरेण रूपनिष्पत्तावेवमपि व्याख्यातुं शक्यत इत्यभिप्रायेण टीकेत्याशयेनाह— ष्णु प्रस्रवण इति। अतोऽन्यन्मोक्षं प्रति क्रियानुप्रवेशद्वारमिति भाष्येणैव क्रियाफलत्वव्यापकीभूतनिवर्त्याद्यन्यतमत्वव्यावृत्त्या मोक्षस्य क्रियाफलत्वव्यावृत्तिरिति युक्तिः सूचितेति भाष्यभावं वर्णयितुमेतदुक्तमित्या-
२७४ दिटीकेत्याह— इत्याशङ्क्याहेति। परिहारान्तरेति। ततश्च तदर्थं पुनः शङ्केति भावः। पूर्वपक्ष इति। ज्ञानं क्रिया मानसी कस्मान्न विधिगोचर इति शङ्कायामित्यर्थः। वस्तुत इति व्याख्याने बीजमाह— औपाधिकं त्विति। वृत्त्युपरागोपाधिकं ब्रह्मणः कर्मत्वमिति परैरनभ्युपगमात्तन्निषेधेऽनुक्तोपालम्भः स्यादिति भावः। ननु ज्ञानस्य क्रियात्वनिराकरणपरतया

भासमानं भाष्यं विधेयत्वनिराकरणपरतया किमर्थं व्याख्यायत इत्यत आह—यद्वा त्विति । २७५ ज्ञेयवैलक्षण्यमिति । ज्ञेयस्य ब्रह्मणः क्रियागोचरादन्यस्माद्वैलक्षण्यमित्यर्थः । यत्तच्छब्दाध्याहारेणेति । यत्रेत्यस्य तत्रेति सेत्यस्य येति चेत्यर्थः । योजयितुमिति । अनेन टीकायां योजनान्तेन संदर्भेण भाष्यपदानामन्वय उक्तः । तात्पर्यार्थस्तु तस्माद्ब्रह्मज्ञानं मानसी क्रियापि न विधिगोचर इत्यन्तेन प्रकटीकरिष्यत इति सूचितम् । अनेन च वस्तुस्वरूपनिरपेक्षेण विधीयमानायां पुरुषव्यापाराधीनायामेव लोके क्रियात्वप्रसिद्धेर्वस्तुस्वरूपनिरपेक्षा पुरुषव्यापाराधीना च या क्रिया सैव विधेया त्वतथाभूतं प्रमाणज्ञानं क्रियात्वेऽपि न विधेयमिति भाष्याभिप्रायो वर्णितः । ध्यानस्य विधेः प्रागप्राप्तत्वकथनं प्रकृतानुपयोगीत्यत आह—ध्यानस्येति । वषट्कारिष्यन्निन्यस्य विशेष्यं दर्शयति—होतेति । याज्यावक्तेत्यर्थः । ननु न हि यस्यै २७६ देवताया इत्यादिटीकाया ध्यानस्य पुरुषेच्छाधीनत्वं नोपपाद्यत इत्याशङ्क्य विधिप्रवृत्तेः प्राक्प्रमाणप्राप्तत्वं पुरुषेच्छानधीनत्वं तत्र, ततश्च टीकायां प्राप्त्यभावकीर्तनं पुरुषेच्छाधीनत्वेनैवमभिप्रायमित्याशयेनाह—विध्यर्थेति । टीकायामुपासना नोपासितक्रिया तस्याः प्रागेव निरस्तत्वात्, किं तु ज्ञानाभास इत्याह—शाब्दज्ञानेति । यथाक्रममन्वयमाह—उपासनाया इति । ननु कथं क्रियाया वस्तुस्वरूपनिरपेक्षत्वं देवताध्यानादेर्देवतास्वरूपसापेक्षत्वादित्याशङ्क्य कल्पितेनापि तदुपपत्तेर्न वस्तुयाथात्म्यापेक्षा, परं तु क्वचिद्बाधकाभावेन वस्तुनो याथार्थ्याद्वस्तुस्वरूपेणाविरोधः क्वचित्तु विरोध इति वक्तुं पुरुषचित्तव्यापाराधीनायाश्चेति टीका । तत्र क्वचिद्विरोध इति विरोधकीर्तनस्य प्रयोजनमाह—क्रियाया इति । क्रियेवेति भाष्यव्याख्यानेन भाष्यान्तरमपि व्याख्यातमित्याह—अनेनेति । भाष्यस्य क्लिष्टव्याख्याने पूर्वं युक्तिरुक्ता; इदानीं भाष्यानुगुण्यमाह—अत एवेति । नियोज्यविषयराहित्येन विध्यभावं भाष्योक्तमुप- २७७ पादयितुं सत्यमित्यादिटीका; तत्र समर्थः कर्तेत्यादिपदर्यायभिन्नानां सामर्थ्यादीनामुत्तरोत्तरं प्रति हेतुत्वं दर्शयन् तवेति सत्सप्तम्याश्रयणेन विषयस्य नियोज्यत्वं हेतुत्वमन्वयव्यतिरेकसिद्धमित्याह—यः समर्थ इत्यादिना । उक्तविषयस्येति । ततश्च तदभावान्नियोज्याभावोऽपि सिध्यतीति भावः । अनेवंभूतत्वमेव दर्शयति—श्रवणं हीत्यादिना । किं तात्पर्यावगममात्ररूपं श्रवणं विधेयं किं वा ब्रह्मणि तात्पर्यमवगच्छेदित्येवं विषयविशेषावच्छिन्नतात्पर्यावगमरूपम् ? नाद्यः, अध्ययनविधिनैव कर्मकाण्डवाक्यानामिव वेदान्तानामपि तत्सिद्धेः विधेयवैयर्थ्यादित्यभिप्रेत्य द्वितीयं किं तादृशोऽवगमः प्रकरणान्तरेण न ज्ञात उत ज्ञात इति विकल्पं मनसि निधाय क्रमेण दूषयति—तस्य चेति । अवगमे चेति । ज्ञानगोचरज्ञानस्य तद्विषयवि- २७८ षयकत्वेन तस्य तत्त्वादिति भावः । युक्त्यनुचिन्तनमात्रं संभावनादिनिरासाय वाक्यान्तरेष्विव वेदान्तेष्वपि सिद्धमिति तन्न विधेयम्, किं तु विपरीतरोपावच्छिन्नमेवेत्याशयेनाह—विषयविशेषेति । अवगतस्य न कर्तुं शक्यत्वं ज्ञातत्वात्, अनवगतस्य तु कर्तव्यत्वेन बोद्धुमशक्यत्वामित्यर्थः । उपासनस्य निदिध्यासनस्य । ननु ब्रह्मप्रत्ययावृत्तिर्निदिध्यासनं योऽयमवगमस्तस्य ब्रह्मप्रत्ययत्वेऽपि कथं निदिध्यासनत्वसिद्धिः तस्यैकत्वात्प्रत्ययसमुदायस्यैव च निदिध्यासनत्वादित्यत उक्तम्—यथाश्रवणमननमिति । श्रवणं मननं चानतिक्रम्य तत्समान- २७९ विषयको यः प्रत्ययस्तदप्राप्तेरित्यर्थः । तथा च श्रवणमननाभ्यां सह त्रित्वात्समुदायसिद्धिरिति

भावः । **विधित्सितार्थस्येति** । न तावत्साक्षात्कारफलकं ध्यानमिह विधेयम्, तस्य लोकत एव प्राप्तत्वात् । नापि ध्यानेनैव साक्षात्कुर्यादिति नियमः, ब्रह्मसाक्षात्कारे उपायान्तराभावेन वाक्यार्थाभावात् । नापि नैरन्तर्यावधिः, तदभावे चित्तैकाग्र्यसाक्षात्कारयोरदर्शनेन तस्यापि लोकत एव सिद्धेः । अतः परिशेषाद्दृष्टार्थतया प्रत्ययावृत्तिमात्रं विधेयम्, तच्च जातमिति न पुनः कर्तव्यत्वमित्यर्थः । दर्शनस्य तु केवलवस्तुतन्त्रत्वेन कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वं स्फुटमेवेत्याह— **दर्शनस्य त्विति** । अनुवादस्य प्रवृत्तिविशेषकरत्वमुपपादयितुं तथा हीत्यादिटीका । तत्र कथं मनःप्रवाहस्य विषयसंबन्धिप्रसरणखिलीकरणं कथं वा विषयेच्छादिसेतूद्घाटनेन प्रत्यगात्मसंबन्धप्रसरणसंपादनमित्यतस्तदुपपादयति— **दर्शनार्थ-**

२८० **मिति** । अनुवदन्ति कुर्वन्तीति च शत्रन्ते पदे । **सामर्थ्यादिति** । उपनिषद्गम्यत्वसिद्ध-

२८१ वत्कारसामर्थ्यादित्यर्थः । यदि हीत्यादिटीकाया अयमर्थः— किं सर्वत्र कार्य एव संगतिग्रहाद्वेदान्तानामपि कार्यपरत्वमुत क्वचित्सिद्धार्थे संगतिग्रहसत्त्वेऽपि ? नाद्य इत्याह— यदि हीति । न द्वितीय इत्याह— अथ भूतेऽपीति । ननु संगतिग्रहव्यापकस्य शब्दप्रयोगस्य व्यावृत्तौ न संगतिग्रह इत्युक्तम् ; अत आह— तत्र तावदिति । एवं सत्येव न भवेदकार्यार्थे संगतिग्रह इत्यर्थः । ननु कुतूहलार्थप्रयुक्तेष्वपि वाक्येषु प्राथमिककार्यव्युत्पत्त्यनुरोधेन कार्यपदाध्याहारोऽस्त्वित्यत आह— **बहुलमुपलब्धेरिति** । बहुलप्रयोगानुरोधेन गौरवेण पदान्तरलभ्यत्वेन च कार्यांश एव त्यक्तव्यः । अन्यथा दण्डेन गामभ्याजेति वाक्ये प्रथमव्युत्पत्तौ दण्डकरणकगोकर्मकानयनकार्यमेव सर्वेषामपि पदानां शक्यं स्यादिति भावः । कुतूहलार्थं वाक्यमुदाहृतम् । टीकायाम्— आखण्डलादीति । तथाचष्टे— **आखण्डलादीनामिति** ।

२८३ हर्षादिना पुरुषान्तरवर्तिनी बुद्धिरुन्नेतुं शक्यत इत्येतदुपपादयितुं तथा हीत्यादिटीका । तत्र प्राथमिकव्युत्पत्त्युपजीवनेनैव सिद्धार्थव्युत्पत्तेस्तदनुरोधेन स्नानदानादिकर्तव्यतापरत्वमेव वाक्यस्य कल्प्यतामित्याशङ्क्य तदनुपजीवनेनैव व्युत्पत्तिं दर्शयितुमविदितेत्यादिविशेषणम् । हर्षे हेत्वन्तराप्रतीतिस्फोरणाय पटवासेत्यादिविशेषणम् । एवं विशेषणद्वयप्रयोजनं सिद्धवत्कृत्य पदानि व्याचष्टे—**अभ्यर्णं निकटमित्यादिना**। **प्रत्युक्त इति**। पूर्वपक्षोक्त इत्यर्थः। अनुपदेशतामपीत्यपिशब्दसूचितं विशेषं दर्शयति—**प्रवृत्तिनिवृत्त्याश्रयणं हीति** । **असिद्धिरुद्धृतेति** । सिद्धे संगतिग्रहतज्ज्ञापकप्रयोगाद्यसंभवात्प्रमाजनकत्वमित्येतन्निरस्तमित्यर्थः ।

२८४ **बाधं परिहरतीति** । वेदान्तवाक्यानामेव पक्षतया तस्य पक्षत्वाभावादिति भावः । **सिद्धसाधनादिति** । पूर्वपक्षिणा वेदान्तानां सिद्धे ब्रह्मणि मुख्यतात्पर्याभावेन प्रमितिजनकत्वानभ्युपगमेऽपि प्रतीतिजनकत्वाङ्गीकारादिति भावः । **साध्यसमत्वापातादिति** । भूतार्थविषयकत्वं हि साध्यं भूतार्थविषयकप्रमाजनकत्वमेव प्रमाणानामाहत्य प्रमेयविषयकत्वासंभवेन प्रमाद्वारैव तदभ्युपगमात् ततश्च साध्याविशेष इत्यर्थः । ननु यद्भूतार्थविषयकप्रमाजनकं तन्न कार्यविषयं यथा चक्षुरादीति विशेषव्याप्तिरेव संभवात्सामान्यव्याप्तिप्रदर्शनमयुक्तमित्याशङ्क्य द्वितीययत्तच्छब्दयोः प्रकृतभूतार्थपरत्वाद्विशेषव्याप्तिरेव दर्शितेत्याशयेनाह— **यत्तच्छब्दावपीति** । **उपोपसर्गश्चेति** । ततश्च निर्विशेषब्रह्मस्वरूपं समीपे साक्षिरूपेण विपर्यासकृत्य सवासनामविद्यां सादति श्रणातीति व्युत्पत्त्या ब्रह्मविद्यैवोपनिषदित्यर्थः । भाष्ये असंसारित्वादिविशेष-

णानामनर्थकत्वात्कथं टीकायां तद्व्याख्यानमित्याशङ्क्य किं वेदान्तानां सिद्धे वस्तुनि संगतिग्रहा-
यभावेन तद्बोधकत्वमेव नेति ब्रवीषि किं वा तद्बोधकत्वेऽपि न तत्र पर्यवसानं किं तु तद्द्वारा
कार्य एवेति विकल्पं मनसि निधाय 'सोऽसावुपनिषत्स्वेवाधिगत' इत्यनेनौपनिषदस्य पुरुषस्येत्ये-
तदंशविवरणभाष्येण प्रथमं निराकृत्य अनन्यशेषत्वादित्यंशविवरणेन द्वितीयं निराकर्तुमुत्तरभा-
ष्यम्। तत्र किं ब्रह्मणो दध्यादिवत्क्रियाशेषत्वात्तद्बोधकस्य 'दध्ना जुहोति' इत्यादिवत्कार्यपर्यवसा-
नम् अथ वा व्रीह्यादिवत्क्रियासंस्कार्यत्वात् 'व्रीहीन्प्रोक्षति' इत्यादिवदिति विकल्पनिराकरणा-
र्थमसंसारीत्यादिविशेषणानीति न दोष इत्याशयेनाह— वस्त्वक्रियाशेषमिति। वस्तुतोऽसं-
सारिणोऽपि जीवस्याहंप्रत्ययविषयत्वादहंप्रत्ययविषयाद्भिनत्तीति कथं टीकोच्यत आह— भाष्य
इति। ततश्चाहंप्रत्ययपुष्कलविषयाद्भिनत्तीति टीकार्थ इति भावः। आद्यकल्पनिराकरणार्थमसंसा-
रीति विशेषणम्; तेन कथं तन्निरास इत्यत आह— क्रियारहितत्वमिति। द्वितीयं निराक- २८५
र्तुमुत्पत्त्यादीति विशेषणम्। तत्र क्रियासंसर्गराहित्यं हेतुः। अन्यशेषत्वमपि तत्र हेतुर्भवितुमर्हती-
त्यभिप्रायेण टीकेत्याह—व्यवहितमपीति। अनन्यशेषत्वमपीत्यन्वयः। रक्षाशेषाः भस्मशेषाः।
वेदान्तानां सिद्धब्रह्मबोधकत्वस्य समर्थितत्वाच्छङ्कानुपपत्तिरित्याशङ्क्य वेदान्तानां सिद्धब्रह्मबो-
धकत्वाभावः किं सिद्धे क्वचिदपि संगतिग्रहासंभवेन वेदान्तानां सिद्धे ब्रह्मणि संगतिग्रहाभावात्किं
वा अन्यत्र सिद्धे संगतिग्रहसंभवेऽपि ब्रह्मणि वेदान्तपदानां संगतिग्रहासंभवादिति विकल्प्य प्रथमं
निराकृत्य द्वितीयं शङ्कत इत्याह— एवं सिद्धार्थेति। अपदार्थस्य कथं वाक्यार्थत्वमिति २८६
शङ्कायाः कः परिहार इत्याशङ्क्य यत्र पदैराहृत्य वाक्यार्थो बोध्यते तत्र संसृष्टपदा-
र्थस्य वाक्यार्थतया पदार्थत्वमवेक्षणम्, यत्र तु लक्षणया स्वरूपमात्रं बोध्यते यथा सोऽयं देवदत्तो
घटाकाशो महाकाश इत्यादौ तत्र न पदार्थतापेक्षा। एवं च प्रकृते सोपाधिकस्वरूपवाचकानां
वेदान्तपदानामभ्युपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकगृहीताद्वितीयब्रह्मतात्पर्यकाणामुपा-
ध्यंशपरिहारेण न स्वरूपज्ञापकत्वं संभवतीति परिहारतात्पर्यमाह— स्वयंप्रकाशत्वेनेति।
ननु निषेधमुखेन कथमात्मनिर्वचनम्, धर्मिज्ञानाभावे निषेधस्यैवायोगादित्यत उक्तम्—
स्फुरत्यात्मनीति। तर्हि शास्त्रेण तद्बोधनं व्यर्थमित्यत आह— समारोपितद्वय-
निषेधेनेति। निषेधे धर्मिप्रतियोगिप्रमैव तन्त्रम्, शशशृङ्गे वस्त्वन्तरस्य वस्त्वन्तरे शशशृङ्गस्य
वा निषेधादर्शनादिति शङ्कते— नन्विति। शशशृङ्गादेरपि भासमानतादशायामनुभव-
सिद्ध एव निषेधः इतरथा भासमानत्वस्यैवाभावान्न निषेध इति परिहारतात्पर्यमाह—
भासमान इति। भातीति सप्तम्यन्तम्। एवमपि कथमुपाधेर्भानमित्यत आह— तत्सा-
क्षिक इति। ततश्च साक्ष्येव तद्भानमिति भावः। य आत्मेति। बृहदारण्यकचतुर्थाध्याये २८७
'अथात आदेशो नेति नेति' इति वाक्ये इदं नेतीदं नेति निषेधाधिष्ठानत्वेन निरूपितमात्म-
स्वरूपम्। तत्पञ्चमाध्याये 'अगृह्यो न हि गृह्यते' इत्यादिना पुनर्निरूप्यत इत्यर्थः। आत्मनो
निरासे प्रपञ्चस्य सत्तास्फुरणे उभे अपि न स्यातामिति परिहाराभिप्रायमाह— न केवल-
मिति। प्रत्युक्तत्वादिति भाष्यमनुपपन्नम्, अस्याः शङ्कायाः प्रागनिरस्तत्वादित्याशङ्क्य
टीकायामौपनिषदः पुरुषः नाहंप्रत्ययविषयः तस्मात्कर्तृत्वादिलक्षणाहंप्रत्ययविषयत्वस्य प्रत्युक्तत्वान्नि-
रस्तत्वादित्येवं व्याख्यातम्, तदेतद्भाष्यप्रदर्शनेन विवृणोति—संस्कार्यत्वेति। अत्र टीकायां

जीवब्रह्मणोरभेदात्कथमेकस्मिन्नहंप्रत्ययविषयत्वतदभावाविलाशङ्क्य कात्पनिकभेदशालिन्युपहिते जीव एवाहंप्रत्ययविषयत्वं शुद्धे तु नैवमिति मानान्तरागोचरत्वादौपनिषदत्वं परमात्मन इत्येव- मेतदुक्तमित्यादिना परिहृत्य तत्रैव भाष्यमवतारितम्। एतदेव प्रपञ्चयतीति तदनुपपन्नम्, तत्साक्षित्वेन प्रत्युक्तत्वादिति पूर्वभाष्यानुरोधेन न ह्यहंप्रत्ययेत्यादिभाष्यस्य साक्षित्वेन प्रत्यु- क्तिप्रकटनपरत्वौचित्यादित्यत आह— **न ह्यहंप्रत्ययेति**। अहंप्रत्ययविषयत्वस्य प्रत्युक्तत्वा- दुपपन्नमौपनिषदत्वमिति। पूर्वभाष्यार्थः। अन्यथा शङ्काया अनिरासात्; ततश्च तदुपपादना- र्थत्वं न हीत्यादिभाष्यस्येत्यर्थः भाष्य इति तच्छब्दनिर्दिष्टस्य साक्ष्यस्य कर्तुरेव विधिकाण्डे समधिगतेरिति भावः। सर्वभूतस्थत्वविशेषणार्थकथनेन बौद्धमतानधिगतत्वमुपपादयति—

२८८ **विनश्यत्स्विति**। समत्वादिविशेषणानां प्रयोजनमाह— **सर्वत्र आत्मेत्यादिना**। समत्वमेकत्वम्, ततो दिगम्बरमतनिरास इत्यर्थः। भाष्यगतेनातःशब्देनानधिगतत्वं परामृ- श्यत इति व्याख्याय सर्वस्यात्मत्वं वा तेन परामृश्यत इति व्याख्यातमथ वेति। तदापाततः अनधिगतत्वस्यैव पूर्ववाक्यार्थस्य प्राधान्येन सर्वनाम्ना परामर्शौचित्यात्। अत इत्यनेनात्मत्वप- रामर्शे उत्तरवाक्ये आत्मत्वादेवेति स्वरूपेण कीर्तनं न स्यात्। अत एव चेत्येव वक्तुमुचितत्वा- च्चेति ध्येयम्। ननु विधिशेषत्वं नेतुमिति भाष्येण प्रागुपपादितमनन्यशेषत्वं पुनरुपपाद्यते, तस्य किं प्रयोजनमित्याशङ्क्य वृत्तकीर्तनपूर्वकं तत्प्रयोजनं दर्शयति— **औपनिषद- त्वेत्यादिना**। अहंप्रत्ययविरोधमिति भाष्येऽभिहितमात्मनो यद्विशेषणमुपनिषदेकगम्यत्वं तस्यात्मविषयकेणाहंप्रत्ययेन बाधमाशङ्क्याहंप्रत्ययविषयस्य मिथ्यात्वेन तद्भिन्नस्य शुद्ध- स्यौपनिषदत्वं विवृतमित्यर्थः। **अनन्यशेषत्वेति**। स्वप्रकरणस्थत्वहेतुना मुमुक्षाका- रेण प्रागुपपादितस्यानन्यशेषत्वस्यात्मत्वरूपहेत्वन्तरेण विधिशेषत्वाभावात्मना विशेषरूपेण विवरणायेत्यर्थः। **अनुपङ्गेणेति**। न शक्य इत्यनुषङ्गेणेत्यर्थः। **विध्यशेषत्व इति**। अन- धिगतत्वमतःशब्दार्थ इति पक्षे तस्य विध्यशेषत्वे हेतुत्वं न संभवति, मानान्तरानधिगतस्यापि यूपाहवनीयादेर्विधिशेषत्वात्। अतो वक्ष्यमाणमात्मत्वहेतुमत्राप्याकृष्य व्याचष्ट इत्यर्थः। भाष्ये आत्मनोऽद्वयत्वादिकमुक्तम्, तदर्थं तादृशस्यापि कर्तुः कार्यशेषत्वेन विध्यशेषत्वे तस्य हेतुत्वा- योगात् आत्मत्वस्य तत्र हेतुत्वेनान्वितत्वाच्चेत्याशङ्क्य शङ्कोत्तरं भाष्यमिति दर्शयन्नपि चेति टीका-

२८९ मवतारयति— **मा भूदिति**। तर्हि कथमपिचशब्द इत्यत आह— **अनन्यशेषत्व इति**। एकस्मिन्भाष्ये हेत्वन्तरसमुच्चयार्थो न भवति, किं त्वेकस्मिन्हेतौ साध्यान्तर- समुच्चयार्थ इति भावः। नन्वात्मत्वादेवेति भाष्यटीकयोरेवकारः प्रयुक्तः, स च निर्दि- ष्टस्य पुनर्निर्देशे भवति, नान्यथेत्यत आह— **भाष्य इति**। भाष्ये अत इति योऽयं शब्दः तदुक्तावेवेत्यर्थः। एतच्च द्वितीयव्याख्यानुरोधेन। प्रथमव्याख्यायां तु सर्वस्यात्मेति हेतुगर्भविशेषणे उक्तादेवेति व्याख्यानं द्रष्टव्यम्। दर्शनस्य कथं परिहार इत्याशङ्क्य शरीरं सुखमित्यादिवत्तदधिकरणावच्छेदकेऽपि तदधिकरणत्वदर्शनमुपपन्नमित्याह— **कल्पितस्येति**। सर्वं हीति भाष्यभावमभिधाय पुरुषो हीति भाष्यं व्याख्यातुं पुरुष एव हीत्यादिटीका। तत्रानन्तशब्दस्य नित्यार्थकत्वभ्रमं वारयति— **अनवधिरिति**। विक्रियाहेत्वभावादिति

२९० भाष्यगतहेतोरेकस्यैव मानादपिचशब्दानुपपत्तिरित्यत आह— **धर्मान्यथात्वेति**।

तथा च विक्रियाया अभावात्तद्धेत्वभावाचेति भाष्यार्थ इति भावः । अत एवेति भाष्ये अतः-शब्देन कूटस्थनित्यत्वपरामर्शे तस्य नित्यत्वे हेतुत्वानुपपत्तिरित्यतो व्याचष्टे— यत एवेति । २९० श्रुत्युपस्कारकतया तस्मादित्युक्तं भाष्ये । तदर्थमाह— कल्पितस्येति । एतच्छ्रुत्युदाहरणस्य प्रकृतोपयोगं दर्शयन्नाह— निरतिशयेति । दृष्टो हि तस्यार्थ इति शाबरवाक्ये तस्येत्यस्यार्थमाह— वेदस्येत्यर्थ इति । क्रियत इति कर्मेति व्युत्पत्तिमभिप्रेत्य शङ्कते— २९१ नन्विति । अनुष्ठानाय किंचित्कर्म बोध्यते वर्जनाय किंचित्कर्मेति प्रतिषेधशास्त्रमपि कर्मविषयमेव । अत एव सौत्रं धर्मग्रहणमुल्लङ्घ्य कर्मशब्द एव भाष्ये प्रयुक्त इति परिहरति— अत आहेति । आम्नायस्येति । सूत्रविषये पूर्वं परिहारस्यानभिधानाद्भाष्यटीकयोरपि चशब्दानुपपत्तिरित्यत आह— शाबरेति । अतदर्थानामित्यर्थशब्दस्य क्रियार्थत्वादित्येतदनुवादत्वादवशिष्टावर्थशब्दौ विकल्पविषयाविल्याशयेनाह— क्रियार्थत्वादिति । शाबरवाक्ये चोदना हीति विधिवाक्यस्य निर्दिष्टत्वादवगमयितुमित्यत्र वाक्यार्थत्वेनेति पर्यवस्यति । ततश्च विधिवाक्यगतानां द्रव्यादिशब्दानां क्रियाप्रयोजकत्वमुक्तं भवतीति परिहरति— अत आहेति । कार्यसदसद्भावाभ्यां वैषम्यं शङ्कते— कार्यान्वितेति । २९२ प्रयोजनसदसद्भावावेव तन्त्रम्, न कार्यसदसद्भावाविति परिहरति— अत आहेति । तदेव दर्शयति— कार्यान्वितेति । उत्तरत्रेति । उच्यते अनवगतात्मेति भाष्यव्याख्यानावसर इत्यर्थः । नन्वितरान्विते शक्त्यनभ्युपगमे कथमन्वितप्रतीतिः शक्त्यविषये शब्दस्य बोधकत्वायोगादित्यत आह— अयमभिसंधिरिति । विशिष्टाभिधाने विशिष्टशक्त्यनङ्गीकारे किमानयनादिविशेषान्वयो लक्ष्यः आत्मान्तरान्वयमात्रं वा? आद्यं निराकृत्य द्वितीयं निराकरोति— न चार्थान्तरेति । तस्य चेति । वाच्यस्येत्यर्थः । अन्वयानुपपत्तिरेव लक्षणाबीजमिति नायमस्ति नियमः, यष्टीः प्रवेशयेत्यादौ तात्पर्यानुपपत्त्यापि लक्षणादर्शनात्, अतः सामान्येन तात्पर्यविषयीभूतवाक्यार्थानुपपत्तिरेव लक्षणाबीजम्, सा च वाच्यस्य तात्पर्याविषयत्वे अन्वयायोग्यत्वे अन्वयाभावे चाविशिष्टेति नानुपपत्त्यभाव इत्याह— मुख्यार्थेति । अन्वितलक्षणाया इति । तथा च शालिकानाथवचनं २९३ पदार्थलक्षणाभिप्रायमिति भावः । संबन्धाभावं परिहरति— न चेति । ननु यत्र संबन्धिनोः परस्परानुप्रवेशस्तन्तुपटादौ तत्रैव तादात्म्यसंबन्धः । प्रकृते च विशेष्यस्वरूपस्य विशिष्टेऽनुप्रवेशात्कथं तादात्म्यमित्यत आह— कस्यापीति । समुदायसमुदायिनोरिव विशिष्टस्वरूपयोरपि संबन्धान्तरासंभवेन तादात्म्यविशेषस्यैव स्वीकारादिति भावः । ननु समभिव्याहृतयावद्गुणान्वितप्रधानपदार्थ एक एव सर्वैरपि पदैर्लक्षणीयो न तु प्रत्येकं तत्तदर्थान्वितस्वस्वार्थः, वाक्यार्थभेदेन वाक्यभेदापत्तेः, तथा च नियमासिद्धिरिति शङ्कते— नन्विति । पक्षधर्मताबलात्साध्यविशेषसिद्धिवदाकाङ्क्षादिबलाद्विशिष्टवाक्यार्थसिद्धिः । परं तु शब्दबोध्यस्य वृत्तिविषयत्वनियमाल्लक्षणाकल्पनमिति परिहरति— तदुच्यत इति । प्रयोगस्त्विति । उपपादिते कार्यान्वितशक्तिनिरास इत्यर्थः । नानयत्यन्वितेति । परमतसिद्धस्यैव निषेधान्न प्रतियोग्यप्रसिद्धिदोष इति भावः । ननु तत्तदर्थान्तरविशिष्टानामपि भेदात्कथमेकवाक्यत्वमित्यतस्तात्पर्यमाह— गुणभूतेति । प्रधानपदार्थभेदे तु वाक्यभेद एवेति २९४

भावः । अस्मिन्नव्यवहितेऽर्थे संमतिरुच्यत इति भ्रमं वारयति— **पदानामिति** ।
२९५ पदानामेव विशिष्टार्थपरत्वे शक्यपदार्थवैफल्यमित्यत आह— **पदार्थानां चेति** । **उत्पाद्य-मात्रपर इति** । संस्कार्यादिसाधारण्येन कार्यमात्रपरो यथा स्यादित्येतदर्थमित्यर्थः । कार्यस्य सुखदुःखाभावरूपत्वाभावेन कथं प्रयोजनत्वमित्याशङ्क्य गौणं तदित्याह— **कार्यं हीति** । **व्युत्पत्तिनियममिति** । प्राथमिकव्युत्पत्तिनियममित्यर्थः । अक्रियात्वेऽपीति भाष्येण द्रव्यगुणादिभूतोपदेशो न विरुद्धः तस्य क्रियार्थत्वेन कार्यान्वितव्युत्पत्त्यभङ्गादित्युक्तम् । तद्वैपरीत्यं प्रकृते दर्शयितुमेवं चेति टीकेत्याह— **अङ्गीकृत इति** । कार्यान्विते भूत एव संगतिग्रहाद्वेदान्तानां न ब्रह्मपरत्वमिति वदन्प्रष्टव्यः किं कार्यान्वितत्वमुपलक्षणं शक्त्युपाधिर्वा विशेषणं वा? नाद्यः भूते व्युत्पत्तिग्रहाविरोधादिति वक्तुं न हीत्यादिटीका । तदभिप्रायमाह—
२९६ **भवत्विति** । द्वितीयमाशङ्कते— **तत इति** । तदादिशब्दशक्तिग्रहे बुद्धिस्थत्वादीनामुपाधित्वं युक्तम्, अबुद्धिस्थे क्वचिदप्यप्रयोगात् । कार्यान्वितत्वं तु नैवम्, सिद्धार्थमात्रपर्यवसितानामपि वाक्यानां बहुलमुपलब्धेरिति परिहरति— **अत आहेति** । मृत्वा शीर्त्वा वेति मरणशीर्णताभ्यामक्लेशो लक्ष्यत इत्याशयेनाह— **क्लेशेनेति** । तृतीयमाशङ्कते— **स्यादेतदिति** । अन्यत्र गृहीतशक्तिकं पदं नान्यदभिदधातीत्यत्र दृष्टान्तमाह— **न हीति** । विशेषणत्वमसिद्धमिति परिहरति— **अत आहेति** । उपाधित्वमेव दृष्टान्तपूर्वकमाह— **तथा हीति** । **शब्दार्थावगत्युपायतामात्रमिति** । तथा च विवक्षादिवत्कार्यान्वयमपि परित्यज्य लाघवात्पदार्थस्वरूप एव शक्तिं गृह्णातीति भावः । प्रथमं तथा शक्तिग्रहेऽपि पश्चात्याग एव लाघवादिना युक्त इत्याशयेनाह— **अत इति** । कार्यान्वयं विहायापि यः प्रयोगभेदस्तस्मिन्प्रसक्ते सति शुद्ध एव संगतिरिति निश्चयाद्भूतमपि पदशक्यमित्यर्थः । **कथमपरथेति** । लोके प्रत्यक्षादिप्रमाणान्तरगृहीता येऽनादिकार्यान्वित एव संगतिग्रहेऽपि न प्रमाणान्तरगृहीतत्वमपि तत्र शक्यम्, वैदिककार्येऽपूर्वे तदभावात् । अतः प्रमाणान्तरगृहीतत्ववत्कार्यान्वितत्वमपि शक्तिग्रहोपायमात्रमित्यर्थः । इदमापाततः, प्राथमिकव्युत्पत्तिकाले कार्यस्येव मानान्तरस्य नियमेनोपस्थित्यभावेन वैषम्यादिति ध्येयम् । अन्यस्मिन्नुपहिते दृष्टे सत्यन्यदनुपहितमदृष्टमित्यस्य न कथंचिदपि प्रसङ्ग इत्यतो व्याचष्टे—
२९७ **तद्वेति** । **अस्ति किलेति** । नासिकात्र्यम्बके ब्रह्मगिरिः प्रसिद्धः । कलनाय संकलनाय । सकुसुमफलैर्धूतैः रुद्धो घर्मद्युतेः सूर्यस्य कराणां पातो यासु वनावलीष्वित्यर्थः । यत्र नदी भाति, यत्र च भान्ति वासराणि धवलनिशा इव, स गिरिवरोऽस्तीत्यन्वयः । ननु राज्ञः पुरुष इत्यादिपदानां कथं क्रियानिष्ठत्वाभावः अस्तित्वक्रियाया उपलब्धेः अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽपि गम्यत इति न्यायेन लडन्तस्यास्तिधातोरुपस्थितत्वादित्यत उक्तं टीकायाम्— **न हि पृच्छतेति** । तात्पर्ये सत्येव तदादरो नेतरथेति भावः । **पर्यहार्षीदिति** । वेदान्तानां सिद्धब्रह्मबोधकत्वं न संभवतीति शङ्कायामिति शेषः । यदि नामेत्यादिभाष्यगतयोः शङ्कापरिहारयोरानर्थक्यं परिहर्तुं टीकायां चोदयतीति परिहरतीति चोक्तम् । तदभिप्रायं दर्शयन्नवतारयति— **एवं तावद्व्युत्पत्तीति** । व्याख्याबीजं दर्शयन्नेव चशब्दं व्याचष्टे— **समुच्चयेति** । **शङ्कायोतीति** । संभावनार्थकत्वा-

दिति भावः । सिद्धबोधिपदद्दष्टान्तेन वेदान्तानामपि सिद्धब्रह्मपरत्वमित्युक्तत्वादपि चेत्यादिभाष्यटीकयोरानर्थक्यमित्याशङ्क्य भेदं दर्शयति— **एवं तावदिति** । निषेधेषु २९८ बोध्यतासंबन्धेन कृतिनिवृत्त्या कार्यनिवृत्तिमुपपादयन्कृतिर्हीत्यादिटीकायाः प्रयोजनमाह— **यत्र कृतिरित्यादिना** । विषयश्चास्येति टीकां व्याचष्टे— **न घटवदिति** । यथा घटादिशब्दार्थ एकैकस्मिन्क्षणे परिसमाप्तस्तिष्ठति नैवं कृतिविषयः, किं तु पचतीत्यादौ पाकवत्पूर्वापरीभूत इत्यर्थः । **किं त्विति** । कर्तृकारकादन्यस्य कर्मण उत्पादनायां अत्र णिजर्थो न विवक्षितः उत्पत्तावनुकूल इत्यर्थः । ननु द्रव्यगुणयोः कृतिविषयत्वाभावे कथं तत्साध्यत्वमित्याशङ्क्य परंपरयेत्याह— **तत्रापीति** । भट्टमते द्रव्यगुणशब्दानां कथंचिदपि कार्यावमर्शाभावादाह— **गुरुमतेनेति** । **पदस्मारितेति** । पदैः स्मारिताः कार्यविशेषणानन्विताः ये २९९ पदार्थास्तेषु निमित्तेषु भावान्वयनिमित्तेषु क्रियाया इव द्रव्यादेरपि स्वत एव कार्यान्वयसंभवे सति न क्रियान्वयापेक्षेति कार्यानन्वयः क्रियान्वये निमित्तमित्यनन्वितानां पदार्थानामपि निमित्तत्वमुक्तम् । तेषु पदार्थेषु निमित्ताधीनाभावान्वयावस्था नैमित्तिकीत्यर्थः । **अविशेषेणेति** । ततश्च सर्वेषामपि शब्दानामविशेषेण नियोगविषयसमर्पकत्वं संभवतीत्ययमेव नियोगविषयसमर्पको नायमिति निर्धारणासंभवादनध्यवसाय इति पूर्वः पक्ष इत्यर्थः । किं द्रव्यगुणक्रियाणां साध्यतयोपस्थितौ विशेषाभावादनियमः, उत सत्यपि विशेषे नियोगान्वययोग्यताया अविशिष्टत्वादिति विकल्प्य प्रथमं भावशब्दो हीत्यादिना निराकृत्य द्वितीयमाशङ्क्य निराकरोति— **किमत इति** । भावान्वितस्य च नियोगस्य निराकाङ्क्षतया द्रव्याद्यन्वयप्रसक्तेरेवाभावादनध्यवसायकथा दूरोत्सारितेत्याह— **तल्लाभे चेति** । **भावो भावनेत्यादिभ्य इति** । भावयतेर्धातोः 'एरच्' इत्यनेन सूत्रेणाच्प्रत्यये सति निष्पन्नो भावशब्दो भावनावाचीति भावः । **तेभ्योऽपूर्वमिति** । सूत्रे क्रियाशब्दः क्रियतेऽनेन फलमिति व्युत्पत्त्या ३०१ अपूर्वपर इति भावः । विधेयस्यैव विधिविषयत्वं युक्तमिति शङ्कते— **नन्विति** । उत्पत्तिविधिविहितस्यापि धात्वर्थस्य सानुबन्धरूपेण पुनर्विधेयत्वान्न दोष इति परिहरति— **अत आहेति** । आशयमजानानः शङ्कते—**यदीति** । **द्रव्यदेवताख्येति** । 'ऐन्द्रवायवं गृह्णाति' इत्यत्र 'सोममभिषुणोति' इत्यादिसंनिहितवाक्यनिर्दिष्टसोमरसस्यैव गृह्णातिकर्मत्वेनान्वयादिति भावः । **इतरत्रेति** । सोमवाक्ये देवताया अप्रतीतेरित्यर्थः । द्रव्यविषये वैलक्षण्यादप्रत्यभि- ३०२ ज्ञानमुपपाद्य यागविषये प्राप्त्यभावादेव तदाह— **न च यजेतेति** । ऐन्द्रवायवादिवाक्यावगतद्रव्यदेवतासंबन्धस्य निर्वाहके प्रत्यक्षश्रुते यागे सति नानुमानं युक्तमित्यर्थः । कथं तर्हि देवतालाभ इत्यत आह— **इतरत्रेति** । त्यज्यमानहविरुद्देश्यत्वस्य देवतात्वस्य यागादन्यत्रासंभवाद्ग्रहणेषु श्रुतं देवतात्वं यागद्वारैव निर्वोढव्यमिति देवतानां यागान्वयोऽपि सिद्ध इति भावः । **अरूपत्वादिति** । व्यावृत्तस्वरूपरहितत्वादित्यर्थः । तदेवाह— **न ह्यत्रेति** । अभ्युपगमो ३०३ नैतेन विरुध्यत इत्यन्वयः । ननु टीकायां तदनुवादेन तदनुबन्धीभूतद्रव्यादिपरो भवतीत्युक्त्वा तदनन्तरमिति सर्वत्रापि भावार्थविषय एव विधिरित्युपसंहृतम्, तत्कथमित्याशङ्क्य शाब्दबोधदशायां भावार्थविषय एव विधिः प्रतीयते, तात्पर्यपर्यवसानं तु द्रव्यादौ; तथा च वार्तिकम्— सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किमप्राप्तमित्यन्वेषणायाम-

प्राप्तमात्रविषयोपसंहाराद्विधेर्भावना धात्वार्थयोरनुवाद इत्यभिधीयते, न त्वादित एव तावत्तु द्रव्यं गुणं वा विधीयत इत्यादि ; ततश्च विरोध इत्याह— **यद्यपीत्यादिना** । **विशिष्टं विदधीतेति** । तात्पर्येणेति शेषः । **दध्यादिपरतेति** । ततश्च स्वरूपेण भावार्थस्य प्राप्तत्वेऽपि द्रव्यगुणाद्युपरक्तवेषेण पुनर्विधानसंभवात्कार्यविषयत्वे न किंचिदपि बाधकमिति भावः । **मीमांसकैकदेशिन इति** । शब्दबलवादिनिबन्धनकारानुयायिन इत्यर्थः । सिद्धस्य स्वातन्त्र्येण न विधेयत्वमित्येतदतिदेश्यमित्याह— **तत्रापीति** । नन्वित्यादिना संबन्धस्य विधेयत्वमाशङ्क्यते, तदनुपपन्नम् ; कार्यं हि विधिमतद्विषयतया अन्यस्य विधेयत्वं कृतितत्साध्यमध्यस्थश्च विषयः ; न च संबन्धस्तथा कृत्यविषयत्वादित्याशङ्क्य संबन्धं भावयेदित्येवं विधिसंभवान्न दोष इत्याशयमाह— **एकदेशीति** । ननु यथाश्रुतीति शब्दबलवादित्वादिति भावः । अशक्यत्वान्नैवमित्याह— **इत्याशङ्क्येति** । भवत्यर्थस्योत्पत्तौ विधिवैयर्थ्यमिति तान्निष्पत्तिफलकत्वाद्विधेरिति भावः । ततश्च तस्य सिद्धस्य भवनं प्रत्यकर्तृत्वात्तत्कर्तृकभवनफलकविधिवैयर्थ्याद्भवत्यर्थो न विधेय इति टीकार्थो बोध्यः । न खल्विति टीकायां गगनमुद्दिश्य तस्य भवनकर्तृत्वं प्रतिषिध्यत इति बोध्यम् । **नियोज्याभावादिति** । भवने भवितुरेव नियोज्यत्वादिति भावः । प्रयोज्यशब्दस्य प्रवर्त्यपरत्वं वारयति— **उत्पाद्य इति** । तत्र हेतुमाह— **तद्व्यापारो हीति** । भवनमपि प्रवर्त्यव्यापार एवास्त्वित्यत आह— **तस्य हीति** । 'अष्टाकपालो भवति' इति सामानाधिकरण्यादुत्पाद्यस्य पुरोडाशस्यैव व्यापारं सामान्यरूपेणाख्यातोपात्तं भूधातुर्भवनात्मना विशिनष्टीत्यर्थः । **लक्षितेति** । भवनाक्षिप्तस्यापि भावकव्यापारस्य शाब्दत्वासिद्ध्यर्थं लक्षणाभ्युपगमाल्लक्षितत्वोक्तिः किं द्रव्यदेवतासंबन्धस्य साक्षादेव कृतियोग्यत्वात्कृतिविषयत्वमुत परम्परया? नाद्य इत्याह— **तस्येति** । द्वितीयं शङ्कते— **नन्विति** । 'दध्ना जुहोति' इत्यादौ दध्यादेः कथंचिदपि साध्यत्वासंभवात्कृतिविषयत्वाभावेऽपि द्रव्यदेवतासंबन्धस्य यागद्वारा कृतिसाध्यत्वात्तद्विषयत्वं नानुपपन्नम् । अत एव हस्तादिव्यापारद्वारा कृतिसाध्यस्यापि घटादेस्तद्विषयत्वेन कर्मत्वमित्यर्थः । अयोग्यत्वान्न घटादेः कृतिविषयत्वमिति परिहरति— **अत आहेति** । टीकायां नामार्थमिति हेतुगर्भं विशेषणम् । आख्यातान्तेन पदेन पूर्वापरीभूततया भासमानस्यैव कृत्यन्वययोग्यत्वादतथाभूतस्य नामार्थस्य तदयोगादित्यर्थः । टीकायामपि त्विति । घटं चिकीर्षन्कर्ता दण्डादिकं हस्तादिना व्यापारयति । तथा च हस्तादिव्यापारं पुरुषप्रयत्नो गोचरयतीत्यर्थः । कृतेर्घटविषयकत्वं तत्कर्त्रनुभवविरुद्धं चेति वक्तुं तस्मादिति टीका । यस्माद्घटं कुर्वन्दण्डादिकमेव व्यापारयति तस्माद्घटकृतिं व्यापारविषयामेव प्रतिपद्यत इत्यर्थः । घटादेः कृतिविषयत्वाभावे कर्मत्वं न स्यादिति शङ्कते— **यदि दण्डादीति** । ननु कृतिप्रयोजनत्वेऽपि घटस्य कथं कर्मत्वं तदविषयत्वादित्यत आह— **घटार्थेति** । न कृतिविषयत्वं कर्मत्वे तन्त्रम्, सर्वत्र व्यापारस्यैव कृतिविषयत्वेन तण्डुलादेरप्यकर्मत्वापत्तेः; किं तु कृतिसाध्यव्यापारजन्यफलशालित्वम् ; ततश्च कृतिसाध्यघटार्थव्यापारजन्योत्पत्तिलक्षणफलशालित्वादुपपन्नमोदनादेरिव घटादेरपि कर्मत्वमिति भावः । तर्हि विधेयालाभादाग्नेयवाक्यमनर्थकमिति शङ्कते— **यदीति** । आक्षिप्तो यागो विधेयो लभ्यत

इति परिहरति— **अत आहेति** । यागभावना विधीयत इत्युक्तमिति मत्वा शङ्कते— **नन्विति** । कृत्यविषयत्वासंबन्धस्यैव पुरुपार्थत्वाभावाद्यजेरप्यविधेयत्वे वाक्यवैयर्थ्यं तदव- स्थमित्यर्थः । यागकरणिका स्वर्गभावनैव विधेयेति परिहरति— **अत आहेति** । अतः- शब्दस्य व्यवहितपरामर्शित्वमाह— **यत एवेति** । **तावद्भूतमिति** । यद्यपि 'उपांशुयाज- मन्तरा यजति' इति वाक्य एव यागविधिरिति तदेवोदाहर्तव्यम्, तथापि तस्मिन्वाक्ये कालसंबन्धाश्रवणेन कालसंबन्धविधिलभ्यत्वाचानुवादस्य तदेवोदाहृतं देवतालाभमेवाह— **आज्यभागक्रमे हीति** । वाक्यं दर्शयति— **एवं हीति** । **वृत्रघ्नपदवत्याविति** । ३०७ वृत्रहननप्रकाशकपदवत्यावित्यर्थः । वृधन्वत्पदवत्यौ वृद्धिप्रकाशकपदवत्यौ । प्रकरणमित्ये- कत्वमविवक्षितमित्याशयेनाह— **प्रकृतानीति** । पौर्णमास्यामित्येतद्विद्वद्वाक्यद्वयपरमित्याश- येनाह— **पौर्णमासीति** । आलम्बनपदमध्याहरति— **आलम्बनमिति** । अविरोधमे- वाह— **क्रमावगतेति** । व्यवस्थामात्रविधौ न केवलं विधिलाघवम्, किं तु शब्दयोर्मुख्यार्थ- त्वं चेत्याह— **काले हीति** । **छित्वोपपादनमिति** । ऐदंपर्येण त्रयाणां त्रयाणां समु- ३०८ दायभावसंपादकवाक्याभावेऽधिकारवाक्यं यागानामनेकत्वाद्बहुवचनं स्यात् समुदायाभिप्रायत्वे वा एकवचनं स्यात्, न द्विवचनमित्यर्थः । **तत्रापीति** । न केवलं विद्वद्वाक्ये आग्नेयादिवाक्य- ३१० विहितकर्मानुवादके, अपि तु तेषां फलसंबन्धबोधके; अधिकारविधावपीत्यर्थः । प्रकृतमुपसंहर- तीत्याह— **कृतिनिर्वर्त्यस्येति** । इयता प्रबन्धेन नियोगकृतिभावार्थानां व्याप्यव्यापकभाव- साधनस्य किं प्रयोजनमित्याशङ्क्य न हन्यादित्यादौ किं भावार्थो नेष्यते उतेष्यत इति विकल्प्य प्रथमं निराकर्तुं तथा चेति टीकेत्याह— **एवमिति** । द्वितीयं निराकर्तुमेव चेति टीकेत्याह— **निषेधेष्विति** । पर्युदासाश्रयणे टीकायां दोषद्वयमुक्तम्, स्वयं तात्पर्यग्राहकाभावादपि न पर्युदास इति पर्युदासवृत्त्येति पदसूचितं दोषान्तरमाह— **नामेति** । अब्राह्मणमानयेत्यादौ नामयोगात् नेक्षेतेत्यादावुपक्रमानुरोधेन धात्वर्थयोगाच्च नञः पर्युदासकता; पर्युदासस्तदन्य- त्तद्विरोधि वा तदर्थकतेत्यर्थः । **प्रतिषेधः** संसर्गाभावः । अहननेत्यादिटीकोक्तं दोषद्वयं प्रकट- यति— **तत्रेति** । तस्य व्रतमित्युपक्रमस्य प्रतिषेधविरोधित्वं प्रकटयति— **तत्र हीति** । उपसंहारबलादुपक्रमस्यैव लक्षणास्त्वित्यत आह— **एकस्मिन्नेति** । **आख्यातयोगिनेति** । स्वरसत इत्यर्थः । संकल्पलक्षणायां हेतुमाह— **तथा चेति** । **सर्वक्रियाप्रत्यासन्न इति** । ३११ सर्वस्या अपि क्रियायाः संकल्पपूर्वकत्वादिति भावः । स च संकल्पो नेक्षणविषयकः किं त्वनी- क्षणविषयक इत्याह— **ईक्ष इति त्विति** । नञ्विरोधादिति भावः । तत इति नेक्ष इत्येवंरूपेत्यर्थः । **संकोचकमिति** । प्रकृत्यनुरक्तप्रत्ययान्वयस्वरसस्य नञः प्रधानप्रत्यय- प्रहाणेन प्रकृतिमात्रान्वयसंकोचकमित्यर्थः । **विमतमिति** । हननाभावादिकमित्यर्थः । व्याख्याबीजमाह— **विभागभाष्य इति** । अप्रयोजकत्वमाशङ्कयाह— **अकार्यार्थानां हीति** । टीकायाम् एतदेवेति । ततः किमित्याशङ्क्य तत्फलकथनेनैतदेव विभजत इत्यर्थः । नन्वाक्षेपः प्रवृत्तोऽप्यलाभान्निवर्तते, ततश्च न नियोगोऽपि स्थितिं लभत इति शङ्कते— **विधिश्रुतीति** । अलाभोऽसिद्ध इति परिहरति— **अत आहेति** । हननविरोधी यत्न इति व्यापारविशेष इत्यर्थः । न नेत्यादिभाष्यस्य शङ्कापरत्वाभावादित्याहेति कानुपपत्तिरित्याशङ्क्य

३१२ हेत्वर्थकोऽयमितिशब्द इत्याशयेनाह– **अस्यां शङ्कायामिति**। भाष्यपाठविरोधमाशङ्क्याह– **व्यवहितेति**। नञ इत्यस्य द्विःपाठभ्रमं वारयति— **भाष्य इति**। व्यवहितान्वयेन भाष्यव्याख्याने बीजमाह— **स्वभावेति**। हेत्वकथनान्न्यूनता स्यादिति भावः। ननु नञश्चेत्युत्तरभाष्यं हेतुपरमस्तु, नेत्याह—**नञश्चेति**। **योजयतीति**। ततश्च स्वभावप्राप्तो रागप्राप्तो यो हन्त्यर्थः आख्यातान्तहन्तिधात्वर्थः हननकर्तव्यत्वं तदनुरागेण तत्संबन्धेनेति भाष्यार्थ इति भावः। **किमिह विधेयमिति**। लिङ्प्रत्ययाभिहितस्य कार्यस्य को विषय इत्यर्थः। **नञर्थो वेति**। हननाभावरूप इत्यर्थः। न तु कर्तव्यत्वाभावरूपः, तस्य नियोगविषयत्वशङ्कानास्पदत्वात्। नियोगवाचकेनाख्यातेन कर्तव्यत्वानभिधानेन तत्र नञर्थान्वयायोगाद्विधिविभक्तिश्रवणात्कार्यं तावदत्र प्रतीयते तच्च न भावार्थमन्तरेणेति टीकानुरोधेन विधिविभक्तिविनिर्मुक्तस्यैव विषयसमर्पकत्ववर्णनौचित्याच्च। न च नञो धातुयोगे पर्युदासापत्त्या न च नञः प्रसज्यप्रतिषेधो विधेय इति टीकानुपपत्तिः, नामधातुयोगे सत्यत्र पर्युदास इति नियमो न तु तस्मिन्सति पर्युदास एवेति, अप्रयोजकत्वात्; अत एव गुरुमते हननाभावविषयकं कार्यमित्येव वाक्यार्थः। न च हननाभावस्य सिद्धस्यापि परिपाल्यत्वेन साध्यत्वसंभवात् सिद्धतया प्राप्तत्वादिति हेत्वनुपपत्तिरिति वाच्यम्, कथंचित्साध्यत्वसंभवेऽपि साक्षात्कृतिविषयत्वासंभवेन द्रव्यदेवतासंबन्धवन्नियोगविषयत्वं संभवतीति तदभिप्रायात्। न च तत एव निराकृतत्वात्पुनर्निराकरणवैफल्यम्, प्रकृतोपयोगितया हननपक्षवदस्यापि निराकरणसंभवात्; तत एव प्रधाने विधारकप्रयत्नविधिपक्षे दूषिते हननादिपक्षमपि कदाचिदवलम्बेतेत्यनास्थया तन्निरास इति स्फोरयितुं शाखाचंक्रमणनिरासार्थमित्युक्तमिति ध्येयम्। ननु श्रुतकार्यानुपपत्त्या लक्षणापि सोढव्येत्यत उक्तं टीकायाम्— **विधिविभक्तेश्चेति**। विधिबोधकत्वाभावात्कार्यप्रतीतिरसिद्धेति भावः। ततश्च कर्तव्यत्वस्यैव विध्यर्थत्वात्तदभाव एव निषेधवाक्यार्थो न तु हननाभावविषयकं कार्यमित्यादिरूपेण, हननाद्यभावो नञर्थः कार्यविषयतया समर्प्यत इत्याह टीकायाम्— तस्मादिति। अत्र शङ्कते— **ननु नञर्थश्चेदिति**। ततश्च हननाभावकर्तव्यत्वानुभवविरोधान्न हननकर्तव्यत्वाभावो वाक्यार्थ इति भावः। न्यायविरोधादनुभवो भ्रम इत्याशयेनाह—

३१४ **रागप्राप्तेति**। टीकायाम्— तस्मादिदमाहेति। भाष्यकारो ननु नञः संख्यातहन्त्यर्थानुरागे सति हननाभावस्य कथं कार्यत्वप्रतीतिरित्याशङ्क्य नञश्चेत्यादिभाष्येण स्वसंबन्धिन आख्यातार्थकर्तव्यत्वस्याभावं बोधयतीति सिद्धवन्निर्देशेन कार्यत्वप्रतीतेर्भ्रमत्वमाहेत्यर्थः। किं कर्तव्यत्वाभावज्ञानान्निवृत्तिः उत प्रवर्तकज्ञानाभावात्? नाद्यः, तस्य तद्धेतुत्वे मानाभावादित्याशयेनाह– **कर्तव्यताभावेति**। नान्त्यः, इष्टसाधनतालिङ्गककर्तव्यत्वानुमितिसंभवादित्याह—**सत्यपीति**।

३१५ **प्रागभावतयेति**। प्रसक्तक्रियाप्रागभावतयेत्यर्थः। **अत इति**। बलवदनिष्टसाधनताज्ञानादित्यर्थः। टीकायां राजाज्ञादिपूर्वकयोरिच्छाद्वेषाहेतुकयोर्व्यभिचारवारणाय स्वतन्त्रेति हेतुविशेषणम्। प्रवृत्तिनिवृत्त्योरिच्छाद्वेषहेतुकत्वं प्रसाध्य तयोरिष्टानिष्टसाधनताज्ञानहेतुकत्वं साधयति टीकायाम्— कर्तव्यतैकार्येति। **द्वन्दूदयतति**। यद्यप्यर्थान्तरत्वावारकत्वात्साध्ये विशेषणं व्यर्थमेव तथापीत्यानुपूर्व्यास्सिद्धः कार्यकारणभाव इत्युत्तरटीकालोचनायां प्रवृत्तिनिवृत्तिहेतुज्ञानस्यैवोद्देश्यत्वात्तत्सिद्ध्यर्थं विशेषणमिति भावः। **आशङ्क्याहेति**। फलेच्छा-

द्वेषयोश्च न प्रवृत्तिनिवृत्तिहेतुत्वं मानाभावादिति भावः । **शब्दादीनामिति** । शब्दो लिङादिः, तद्व्यापारस्तन्निष्ठः शब्दभावनाख्यः पुरुषाशय आप्ताभिप्रायः । त्रैकाल्यं त्रयः कालाः। तदवच्छिन्नत्वेनाप्रतीता अर्थभावना त्रैकाल्यानवच्छिन्नभावना । अपूर्वं नियोगः । तदन्तानां ये प्रत्ययाः परीक्षकैः प्रवर्तकत्वेन नञ्समभिव्याहारे निवर्तकत्वेन च स्वीकृताः तत्पूर्वा इत्यर्थः । **प्रत्यक्षव्यवहार इति** । तत्र स्वेच्छाधीनत्वात्प्रवृत्तेरिति भावः । न च पराधीनप्रवृत्तौ तेषां ३१६ हेतुत्वम्, आवश्यिकेष्टसाधनताज्ञानादेव सर्वत्र प्रवृत्त्युपपत्तौ कारणान्तराकल्पनात् । प्रेरणादेरपीष्टसाधनताज्ञान एवान्यथासिद्धिरिति भावः । इत्यानुपूर्व्यादिति टीकाया इष्यनिष्टेत्युत्तरटीकायाश्च पौनरुक्त्यं परिहर्तुमर्थभेदं दर्शयति—**इत्यानुपूर्व्यादिति**। तथा च टीकायां कार्यकारणभावशब्दस्तद्ग्राहकान्वयव्यतिरेकपर इति भावः । किमुभयविशिष्टस्य धात्वर्थस्य लिङ्वाच्यत्वमाशङ्क्यत उत नियोगस्य? नाद्यः, धातुनैव तल्लाभादित्याह— **अत आहेति** । नान्त्यः, क्षणिकस्य कालान्तरभाविफलजनकत्वाय कल्प्यमानस्य व्यापारस्य लोकसिद्धत्वेन नियोगस्य लिङ्वाच्यत्वकल्पनादित्याह— **व्यापार इति** । क्षणिकस्य कालान्तरभाविफलजनकत्वं व्यापारद्वारेत्यस्यार्थस्य पूर्वानुभवस्थले सिद्धत्वादिति भावः । ननु निषेधस्थले निवृत्तिसिद्ध्यर्थमनर्थहेतुत्वं बोध्यत इत्युक्तम्, तद्बोधे सत्यपि सांदृष्टिकेष्टसाधनत्वज्ञानात्प्रवृत्तिप्रसङ्गादित्याशङ्क्य बलवदनिष्टाननुबन्धीष्टसाधनत्वज्ञानस्यैव प्रवर्तकतया बलवदनिष्टानुबन्धित्वज्ञापनेन सांदृष्टिकमिष्टमिष्टाभास इति ज्ञापने निवृत्तिसिद्धिरित्याशयेनाह— **दृश्यमानमपीति** । **न विशेष इति** । ३१८ बलवदनिष्टाननुबन्धीष्टोपायत्वाभावोपलक्षणायास्तुल्यत्वादिति भावः । **श्रुतेष्टोपायत्वेति** । पत्तय इत्यर्थः । ननु प्रवृत्त्यभावबुद्धिमात्रेण कथं निवृत्तिरुक्ता टीकायामित्यत आह— **प्रवृत्त्यभावमित्यस्येति** । एवमपि कथं शङ्कायाः परिहार इत्यत आह— **उद्यत्क्रियाया** ३१९ **इति** । उद्यन्ती प्रसक्ता या क्रिया सन्नोद्यमनादिरूपा ततो मयोपरन्तव्यमित्येवं तत्परावर्तनक्रियोपलक्षितत्वरूपनिवृत्तित्वविशिष्टप्रवृत्त्यभावविषयिण्या निवर्तत इत्यर्थः । **न तु प्रवृत्तिप्रागभावमात्रमिति**। यथोक्तनिवृत्तित्ववैशिष्ट्यरहितं प्रवृत्तिप्रागभावमात्रमवबुध्य निवर्तत इत्यर्थः । निषेधस्थले किमभावबुद्धिधारेष्यते उत नेति विकल्प्य क्रमेण निराकृतं टीकायाम्; तत्र बुद्धिधाराभ्युपगमपक्षः फल्गुत्वादनास्थयेति सूचयितुमनन्तरं व्याकुर्वन्नाह— **यथोक्तेति** । तावदेवेति टीकाया भाष्यार्थकथनपरतामुक्त्वा द्वितीयपक्षाङ्गीकारेण शङ्कानिरासार्थमेतदुक्तमित्यादिटीकेत्याह— **न ह्यभावेति** । इदमौदासीन्यम् । **अपवादनिरासिकेति** । अपवादः प्रति- ३२० योगिसामग्री, तस्याः प्रागभावनिवृत्तिरूपप्रतियोगिजनकत्वात्तन्निरासिका तदन्तर्गतबलवदनिष्टाननुबन्धीष्टसाधनताज्ञानविघटकत्वादिति भावः । नन्वनादेरौदासीन्यस्य सादेर्जीवनस्य च कथं दृष्टान्तदार्ष्टान्तिकतेत्याशङ्क्यापवादनिवर्तकाभावेऽप्यपवादप्रसक्त्या तिष्ठत्येवोत्सर्ग इत्येतावतांशे दृष्टान्तदार्ष्टान्तिकभाव इत्यमुमर्थमौदासीन्यस्योत्सर्गत्वप्रदर्शनपूर्वकं दर्शयति— **अनादित्वादिति** । औदासीन्यमाजानतोऽप्यस्तीति टीकाभिप्रायमाह— **यदौदासीन्यमिति** । प्रसक्तक्रियेत्यादिटीकाभिप्रायमाह— **ततः कर्तव्यतामुक्तमिति** शब्दबलाद्गम्यमानमपीत्यर्थः । विशिष्टावगतिमभिनयति— **यद्धन्यादिति**। एवंरूपेण निषेधेन बलवदनिष्टसाधनत्वेनेति । विशिष्टावगतिमभिनयति— **प्रसक्तधनत्वलक्षणया** विशिष्टमौदासीन्यं ज्ञाप्यत इत्यर्थः । निवृत्तेरुपलक्षणत्वमुपपादयति—प्रसक्त-

**क्रियेति** । औदासीन्यस्य निवृत्त्युपलक्षितत्वमनुपपन्नमिति शङ्कते— **नन्विति** । प्रसक्तक्रि-
३२१ याविरोधिव्यापार एव निवृत्तिरिति परिहरति— **उच्यत इति** । **नञर्थस्त्विति** । बलवद-
निष्टाननुबन्धीष्टसाधनत्वाभावोपलक्षितं बलवदनिष्टसाधनत्वमित्यर्थः । भाष्ये आनर्थक्याभिधा-
नमुपाख्यानादिविषयमित्युक्तम् । टीकायां तु क्रियार्थत्वादेरप्युपाख्यानादिविषयत्वमुच्यते । तत्र
को हेतुरित्याशङ्क्य 'आम्नायस्य क्रियार्थत्वात्' इत्यादेरविशेषेण सर्वसिद्धार्थविषयत्वे कथमानर्थ-
क्याभिधानमात्रमुपाख्यानविषयं स्यादित्यतो भाष्यमुपलक्षणार्थत्वेन व्याचष्ट इत्याह—
३२३ **भाष्य इत्यादिना** । **न निवर्तकतेति** । स्वरूपस्य पूर्वमपि सत्त्वादिति भावः । आत्मशब्दः
३२३ साक्षात्कारस्वरूपपर इत्याह—**स्वमिति** । **अभावत्वाच्चथेति** । भावब्रह्माभिन्नत्वेन मिथ्यात्वा-
ज्ञानेन निवर्त्यमित्यर्थः । अशरीरस्थस्य ब्रह्माभिन्नत्वमसिद्धमिति परिहरति— **नेति** । व्यव-
हितत्वेऽपि योग्यत्वादात्मनः परामर्श इति व्याचष्ट इत्याह— **भाष्य इति** । टीकाकारेण
स्वोक्तेऽर्थे भाष्यमवतारितं तदिदमाहेति । तद्भाष्यं निष्कृष्य दर्शयन्नाह— **शरीरसंबन्ध-
स्येति** । **व्याचष्ट इति** । शरीरसंबन्धस्यासिद्धत्वादिति हेतोरप्रयोजकत्वाशङ्कानिराकरणेनेत्यर्थः ।
ताभ्यामित्यस्य रोचयमान इत्यनेनान्वये धर्माधर्माधीनत्वं शरीरसंबन्धस्य नोक्तं भवेदित्यतस्ता-
त्पर्यमाह— **आत्मनीति** । टीकायां यत्तु मन्यत इत्यादिना प्रवाहानादित्वमवलम्ब्य शङ्कायाः
करिष्यमाणत्वाद्युच्येतेत्यादिशङ्काव्यक्त्यनादित्वावलम्बनेन सत्कार्यवादिन इति व्याचष्टे—
३२४ **धर्माधर्मव्यक्त्योरिति** । **तथापीति** । उभयोरप्यनादित्वेन परस्परहेतुकत्वाभावान्नायं
दोष इति भावः । ययोरनादित्वं न तयोर्हेतुहेतुमत्ता, ययोस्तु सा न तयोरनादितेति तत्र
परस्पराश्रयो दोषः स्यादेवेत्याह— **तत्र नित्येति** । **अन्धपरम्परातुल्येति** । पटशौक्ल्या-
दिनिश्चायकान्धपरम्परातुल्या तद्वदेव वस्त्वसाधिकेत्यर्थः । नन्वात्मनः क्रियासमवायाभावे हेतु-
र्नोक्तो भाष्यटीकयोरित्याशङ्क्य प्रागेवोक्तत्वादिह पुनर्नोक्त इत्याशयेनाह— **आत्मनीति** ।
भाष्यटीकयोरहंप्रत्ययस्य गौणत्वनिराकरणं प्रकृतानुपयोगीत्याशङ्क्य प्रासङ्गिकं तदित्याशये-
३२५ नाह— **देहात्मेति** । **भ्रान्तिनिमित्ताविति** । भ्रान्तिं निमित्तीकृत्यैव तदनन्तरभाविनौ
शब्दप्रयोगप्रत्ययावित्यर्थः । एवं संशयनिमित्तेत्यत्रापि योजना । **अनुपपन्नमिति** । भ्रान्ति-
३२६ शब्दस्य विपर्यय एव प्रसिद्धेरिति भावः । **भ्रान्तेरपीति** । निर्हेतुककार्यायोगादिति भावः ।
**तन्मात्रमिति** । साधारणधर्मदर्शनमात्रमित्यर्थः । **उक्तेति** । सादृश्यादेर्दोषत्वमाश्रित्य तन्नि-
मित्तं यथोक्तधर्मिदर्शनमित्यर्थः । **धवलभास्वररूपस्येति** । अनेन शुक्लभास्वररूपस्य
पुरः स्थितस्य द्रव्यसामान्यस्य शुक्तिरजतविशेषसाधारण्ये सतीति टीका योजिता । **अभि-
धायेति** । शुक्लभास्वरस्येति टीकयेति शेषः । **द्वितीयं दूषयतीति** । दोषस्य प्रमाप्रति-
बन्धकत्वेन शुक्तिप्रमानुत्पत्तावपि शुक्तिर्वा रजतं वेति संशयः कुतो न स्यादिति दूषयतीत्यर्थः ।
समानधर्मधर्मिण इत्यत्र द्विवचनादर्शनान्न द्वन्द्व इत्यभिप्रेत्य कर्मधारयानुगुण्येन पूर्वपदे बहु-
व्रीहिं दर्शयति— **समानो धर्मो यस्येति** । रजतमेव स्मृतमिति फलबलादिति भावः ।
स्मारके सत्यस्मरणमयुक्तं फलनियमस्त्वदृष्टादेवेति परिहरति— **तत्राहेति** । अत इति ।
तुल्यसादृश्योद्बोधितसंस्कारजन्यस्मृतेरविशेषेण कोटिद्वयविषयकत्वादिति भावः । **रागादिति** ।
३२७ रजतमात्रविषयकरागविशेषलक्षणाद्दोषादित्यर्थः । अक्षपादसूत्रं व्याचष्टे— **समान इति** ।

अनेकधर्मपदं मध्यमपदलोपिसमासतया व्याचष्टे— अनेकस्मादिति । एवमभिप्राय ३२७ इति । दर्शनियामकाभावाभिप्राय इत्यर्थः । कथमुक्त इत्याशङ्क्य सामर्थ्यादित्याह—इत्थं हेतुमिति । प्रतिजानतेति । उत्कण्ठापूर्वकं स्मरतेत्यर्थः । प्रतिज्ञार्थकत्वं 'संप्रतिभ्यामनाध्याने' इति सूत्रेणात्मनेपदे प्रतिजानानेनेति प्रसङ्गादिति ध्येयम् । तद्रूपेति । अदृष्टाख्यं कर्मेत्यर्थः । अशरीरत्वं चेति चकारस्य तत्रान्वयायोगादुत्तरत्रान्वयमाह— श्रुतीः स्मृतीश्चेति । ननु तादिदमाहेति टीकाया मनननिदिध्यासनयोरपि न विधिरित्यस्मिन्नर्थे भाष्यमवतारितम्, तत्रावगत्यर्थत्वादिति भाष्येण कथं विध्यभाव उक्त इत्यत आह-- साक्षात्कारो हीति । ननु वामदेवादेर्जन्मान्तरीयमेव श्रवणं हेतुर्भविष्यति ; नेत्याह— जन्मान्तरेति । श्रवणस्य ३२८ साक्षात्कारहेतुताग्राहकप्रमाणाभावे जन्मान्तरे तत्कल्पकस्यैवाभावेन व्यभिचारतादवस्थ्यादित्यर्थः । प्रथमसूत्रेति । विशिष्टाधिकरणं ब्रह्मविचारे प्रवर्तयितु तत्कर्तव्यतापरस्य सूत्रस्य यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति भाष्यस्य च क्लिष्टार्थकत्वापत्तेरित्यर्थः । तत्रेति । ३२९ किं विध्यभावे व्यभिचारेण श्रवणादेः साक्षात्कारहेतुताग्रहो न संभवतीत्यभिप्रायः किं वा विधेयत्वव्याप्यसत्त्वे विधेयत्वेनापि भवितव्यमिति : नाद्यः, गान्धर्वशास्त्रश्रवणादेरिव लोकत एव तद्धेतुताग्रहात् । न च व्यभिचारः, चित्तसंस्कारद्वारैव तद्धेतुत्वाभ्युपगमेन तत्सत्त्वे साक्षात्कारावश्यंभावात् । अत एव वामदेवादिस्थलेऽपि न व्यभिचारः, द्वारसत्त्वात्, तद्बलादेव च तस्य जन्मान्तरीयश्रवणसिद्धिः । न हि लोकसिद्धस्मृत्यनुभवकार्यकारणभावानुरोधेन कल्प्यमानस्य प्राथमिकेष्टसाधनतास्मरणानुकूलस्य जन्मान्तरीयानुभवस्य विध्यपेक्षा दृश्यते । उपपादितश्च श्रवणादेर्लोकत एव हेतुताग्रह इत्यभिप्रेत्य द्वितीयं दूषयति--- न तावदित्यादिना । भवान्तरेति । जन्मान्तरेत्यर्थः । प्रमीतस्य मृतस्य । प्रथमसूत्रं त्विति । विषयादिप्रदर्शनेनैव प्रवर्तकत्वसंभवान्न कर्तव्यतापरत्वं प्रथमसूत्रस्येति भावः । जिज्ञासा कर्तव्येति भाष्यमपि संपाद्यतापरम्, न कर्तव्यतापरम्, इच्छायास्तद्योगादिति भावः । परमते विध्यभावप्रतिपादकबहुभाष्यविरोधान्न किंचिदेतदित्यनास्थया भाष्यं न गृहीतमिति ध्येयम् । निजुह्नुवे निह्नुतं बभूवेत्यर्थः । गुणकर्मत्वनिराकरणभाष्यमेवाह-- यदि हीति । श्रवणादिकमप्युपयोक्ष्यमाण- ३३० संस्कारोऽस्त्वित्याशङ्क्य निराकरोति-- न च श्रवणादीति । अदृष्टपर्यवसायिन एव गुणकर्मणो विध्यपेक्षा, दृष्टे तु लोकत एव सिद्धेर्न तत्र विध्यपेक्षेति भावः । ननु धर्मभिन्नशास्त्रप्रमेयाभावेन पृथक्छास्त्रारम्भासंभवस्योक्तत्वादारभ्यमाणं चेति भाष्यं कथं सगच्छतामित्याशङ्क्य न कृत्स्नशास्त्रारम्भाभिप्रायं भाष्यम्, किं तु धर्मस्यैव वाक्यत्वान्तरत्वकृतभेदाश्रयणेन कथंचिदारभ्यमाणमपीत्येवमभिप्रायमित्याह-- नन्विति । नित्यनिवृत्तीति । वाक्यतदर्थ- ३३१ योर्नित्यत्वादिति भावः । विधीनां साध्यादिभेदाधिष्ठानत्वे हेतुमाह-- तद्विषया इति । ३३२ धर्मबोधकानां विधीनां कथं तदुत्पादिन इति टीकां व्याचष्टे-- तद्विषया अपीति । टीकायां कुत इति प्रश्नो न तदुत्पादकत्वेन तदधिष्ठानकत्वमित्यत आह— पुरुषेणेति । प्रश्नपूर्वकं प्रतीकोपादानमिति स्वातन्त्र्येण, किं तु हेतुभाष्यावतारणार्थत्वाशयेनाह— न हीति । अहेयानुपादेयेति विशेषणमिदमित्यर्थः । तदेव भाष्यं व्याचष्ट इत्याह— न हीत्यादीति । भाष्ये प्रमातृत्वनिषेधस्यैवोक्तत्वात्कथं टीकाया एव कर्तृत्वमिति लभ्यं भाष्यार्थमाह— विधेयेति ।

कर्तृत्वसामान्यनिषेध इत्यत आह-- विज्ञानेति । प्रमाणशब्देन करणानामुपात्तत्वात्कथं नकारार्थत्ववर्णनमित्यत आह-- भाष्यस्थेति । प्रमानिषेधस्यापि कर्तव्यत्वात्तत्परः प्रमाणशब्द इति भावः । नन्वसत्त्वं मिथ्यात्वम् , तद्भिन्नायात्मनो नित्यमिति सर्वदा पुत्रादिबाधप्रसङ्गः । असत्त्वस्य निवृत्तिरूपत्वेऽपि हेत्वभावे कथं निवृत्तिरित्याशङ्क्य तत्र हेतुं दर्शयन्पुत्रादेः
३३३ स्वरूपेण बाधासंभवान्ममकारादिविशिष्टवेषेण बाधनमिति व्याचष्ट इत्याशयेनाह-- पुत्रादेरिति । प्रमित्यभावमाहेति । ततश्च सद्ब्रह्माहमस्येवं स्फुरणशीलं तत्संपादकं कार्यवृत्तिरूपमिति टीकार्थो बोध्यः । निगदव्याख्यात इति । बोधे हेतुभूतं कार्यमित्यस्यार्थस्य स्पष्टत्वादिति भावः । एवं हीत्यादटीकां व्याचष्ट-- नियतेति । ज्ञानकारणमिति । अद्वैतसाक्षात्कारकारणमित्यर्थः । ज्ञानवृत्तिरिति । अद्वैतसाक्षात्कारस्य ज्ञानस्य वृत्तिर्वर्तनमुत्पत्तिरित्यर्थः । अन्वयप्रमातृभेदकथनस्य प्रयोजनमाह-- प्रमातृलय इति । टीकायामितिशब्देन प्रमातुरन्विष्यभेदे अन्वेष्टव्याभेदो हेतुरुक्तः; स एव कथमित्यत आह-- अन्वेष्टव्य इति । अनुपलब्धिबाधितमभिन्नत्वमिति शङ्कते-- नन्विति । आवृतत्वादनुपलब्धिरित्याशयेन परिहरति-- तत्राहेति । स नेति । हेत्वभावात्फलाभावो य उक्तः स न संभवति ज्ञानस्यैवानुदयेन ततः प्रमात्रादिनिवृत्त्ययोगादित्यर्थः । विपक्षे दण्डमाह-- बाध्यस्येति । स्वविरोधिप्रमानुत्पादकत्वप्रसङ्गादित्यर्थः । किं बाध्यस्य प्रमाजनकत्वं न संभवतीति ब्रवीषि, किं वा पारमार्थिकमपारमार्थिकानोत्पद्यत इति, अथ वा मिथ्याभूतस्य कथं मिथ्यानिवर्तकत्वं निवर्तकत्वेऽपि वा कथं निवर्त्यस्य स्वनिवर्तकोत्पादकत्वमिति विकल्प्य प्रथमद्वितीयौ
३३४ निराकृत्य तृतीयं कल्पमाशङ्कते--- नन्विति । अविद्या चेति । प्रमात्रादिरूपेत्यर्थः । अविद्यायाः स्वनिवर्तकोत्पादकत्वमपि न विरुद्धमित्याह-- दृष्टं चेति । अतिभयंकरव्याघ्रादिदर्शने स्वप्ननिवृत्तेरनुभवसिद्धत्वादिति भावः । उच्छेदजननयोरेकाविद्याकर्तृत्वभ्रमं व्यावर्तयन्व्याचष्टे--- अविद्यामयीति । टीकाकारेण विद्याविद्ययोः कार्यकारणभावे निवर्त्य-
३३५ निवर्तकभावे च श्रुतेरुदाहृतत्वात्तदनुसारेण श्रुतिं योजयति--- अविद्यामिति । चैतन्योपरागाद्वृत्तिर्विद्येत्याशयेनाह--- वृत्तिं विद्यामिति । कार्यकारणभावेनेत्युपलक्षणम्, निवर्त्यनिवर्तकभावेनेत्यपि द्रष्टव्यम् । तत्र च तयोरुभयोर्ज्ञानेऽविद्यात्मकं प्रमात्रादिकारणकलापेन विद्यां संपाद्य तया तामवत्थं तदुपलक्षितं तदभिन्नकं स्वरूपं प्राप्नोतीति श्रुत्यर्थ इति भावः । 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्' इति श्रुतिं व्याचष्टे-सदेवेति । इदंशब्दस्य लोकप्रसिद्ध्या प्रत्यक्षसिद्धार्थवाचकत्वनादात शङ्कते— मा भूदिति । किमासीदिति काकुः । आसीत्किमित्यर्थः । उभयवाक्यानुरोधेन कार्यमात्रपरः इदंशब्द इति परिहरति—नेत्याहेति । अविद्यादेरपि सत्त्वात्कथमवधारणम् ? अत आह—स्वकार्येति । स्वशब्देन सदर्थ उच्यते।
३३६ 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतिं व्याचष्टे-- आत्मेतीति । 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इति श्रुतिं व्याचष्टे-- तदिति प्रकृत इति । बाह्यस्य प्रपञ्चस्य सत्त्वात्कथं बाह्यमिति बाह्यमेव इत्यत आह— एवंविधमिति । तस्य विवरणम् कूटस्थमिति । बाह्यत्वे हेतुमाह--एतदनात्मतयेति । 'ब्रह्मैवेदममृतं पुरस्तात्' इति श्रुतिं व्याचष्टे--- यत्पुरस्तादिति । 'ब्रह्म पश्चात्' इत्यादिमन्त्रशेषाभिप्रायमाह— तथा

**पश्चादिति** । 'यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति श्रुतिं व्याचष्टे— **संपततीति** । भाष्ये तथा यागाद्यनुष्ठायिनामेव विद्यासमाधिवशादुत्तरेण पथा गमनम्, केवलैरिष्टापूर्तदत्तसाधनैर्धूमादिक्रमेण दक्षिणेन पथा गमनम्, तत्रापि सुखतारतम्यं तत्साधन-तारतम्यम्, शास्त्रात् 'यावत्संपातमुषित्वा' इत्यस्मात् । गम्यत इति दक्षिणमार्गस्यापि निर्दिष्टत्वाद्यावत्संपातमुषित्वेत्येतत 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' इति श्रुते-रुपलक्षणम् । अतस्तां व्याचष्टे— **इष्टमिति** । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतिं व्याचष्टे— **परमार्थेन इति** । एवकारार्थकस्य वावेत्यस्य व्यवहितान्वयमाह— **न स्पृशत एवेति** । 'अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा ३३७ धीरो न शोचति' इति श्रुतिं व्याचष्टे— **परमार्थेन इति** । **मन्तृमन्तव्येति** । आत्मा-भेदोक्त्या काल्पनिकभेदमादाय जीवब्रह्मणोर्मन्तृमन्तव्यता, न स्वत इति सूच्यत इति भावः । 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतिं व्याचष्टे— **प्राण इति** । शुभ्र इति पदानुरोधात्प्राणमनःशब्दयोरुपलक्षकत्वमाह— **क्रियाशक्तिमदिति** । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः हिशब्दयोगेन हेतुसमर्पकत्वात्प्रतिज्ञाप्रदर्शनपूर्वकं व्याचष्टे— **स्वप्नादीति** । **अनन्वागतस्तेनेति** । तेन दृश्यमानेन कार्येण कर्तृतया अनन्वित इत्यर्थः । पूर्णतापरेण पुरुषशब्देनासंगतत्वं समर्थ्यत इत्याह— **मूर्तान्तरेणेति** । 'अन्यत्र धर्मादन्यत्राधर्मा-दन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति श्रुतिं व्याचष्टे— **धर्माधर्मादिति** । धर्माधर्मग्रहणं तत्फलस्याप्युपलक्षणमिति व्याचष्टे— **तत्फलेति** । अन्यत्रेतिशब्दः प्रथमान्त इत्याशयेनाह— **पृथग्भूतमिति** । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतिं व्याचष्टे— **अस्य विदुष इति** । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुतिं व्याचष्टे— **ब्रह्मण इति** । ३३८ 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत' इति श्रुतिं व्याचष्टे— **यद-स्मिन्निति** । **विधूतकल्पनमिति** । कर्तृत्वादिकल्पनारहितमित्यर्थः । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति श्रुतिं पूर्ववाक्यप्रदर्शनेन व्याचष्टे— **यस्मिन्निति** । 'तद्धै-तत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति श्रुतिं व्याचष्टे— **तत्तत्पदलक्ष्य-मिति** । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इति श्रुतिमाख्यायिकार्थ-कथनपूर्वकं व्याचष्टे— **भारद्वाजादय इति** । **विद्यानिष्क्रयार्थमिति** । गुरुदक्षिणयेति शेषः । 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति' इति 'सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' इति श्रुतिद्वयं तद्भेदप्रकटनपूर्वकं व्याचष्टे— **तत्रापीति** । वल्कलादिकषायद्रव्यसादृश्याद्रागादौ कषायशब्दप्रयोग इत्याह— **वल्कलादिवदिति** । मलस्य कषायस्य क्षारजलसेकमन्तरा न ३३९ नाश इत्यत आह— **ज्ञानेति** । ज्ञानं विवेकः । वैराग्यं प्रसिद्धम् । अभ्यासोऽश्लेषकाम्यानुकूलो यत्नः । त एव क्षारजलम्, तेन विनाशितो यस्तेऽन्वयः । संवर्गविद्याश्रुतेः स्पष्टार्थत्वात्तां प्रदर्शयन्नेवाप्रसिद्धार्थकं विवृणोति— **संवर्गविद्यामिति** । तद्वायतीत्यस्य विवरणमुपक्रम्य-तीति । अप्येतीत्यस्य विवरणं प्रलीयत इति । 'अन्यदेव तद्विदितादथो अविदितादधि' इति

श्रुतिं व्याचष्टे— तद्ब्रह्मेति । 'येनेदं सर्वं विजानाति तं केन विजानीयात' इति श्रुतिं व्याचष्टे— येन प्रमात्रेति । वृत्त्यनुपपत्तेः प्रवृत्त्यनुपपत्तेः । अविषयत्वं ब्रह्मण उपन्यस्येति भाष्यसूचिता श्रुतिः 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इति । तां व्याकुर्वन् 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतिं व्याचष्टे— यद्वाचेत्यादिना । किमाह श्रुतिरित्यतस्तद्दर्शयति— तदेवेति । 'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' इति श्रुतिं व्याचष्टे— यस्य ब्रह्मेति । उत्तरार्धस्य पौनरुक्त्यं परिहर्तुमाह— एताविति । 'न दृष्टेर्द्रष्टारं पश्येः' इति श्रुतिं व्याचष्टे— दृष्टेरिति । कर्मभूताया इति । नित्यदृष्टकर्मभूताया इत्यर्थः । न पश्येरित्यनेन दृशिक्रियाकर्मत्वं प्रतिषिध्यत इत्याह— दृश्ययेति । न पश्येः न विषयीकुर्या इत्यर्थः । भाष्ये न मतेर्मन्तारं मन्वीथा इति चैवमादीत्यादिग्रहणेन 'न विज्ञातेर्विज्ञातारं विजानीयाः' इति श्रुतिरुक्ता । एतच्छ्रुतिव्याख्यानेनैव 'न मतेः' इत्यादिश्रुतिरपि व्याख्याता भवतीत्याशयेनाह— विज्ञातेरिति । 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' इति श्रुतिं व्याचष्टे—तयोरिति । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतिं व्याचष्टे— आत्मायमिति । अर्थाद्विशेष्यलाभ इत्याह— आत्मानामित्यर्थ इति । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति श्रुतिं व्याचष्टे— एको देव इति । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्' इति श्रुतिं व्याचष्टे— स आत्मेति । स पर्यगादित्यस्य फलितार्थकथनं सर्वगत इति । प्रसङ्गात्तत्रत्यभाष्याभिप्रायमाह — भाष्य इति । ततश्च भाष्ये अनाधेयातिशयत्वनित्यशुद्धत्वयोरसिद्धिवारणार्थमेतौ सिंहावलोकितन्यायेनोदाहृतावित्यव्यवहितग्रन्थानन्वयेऽपि न दोष इति भावः । 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत्' इति श्रुतिं व्याचष्टे—आत्मानामिति । आक्षेप इति । प्रयोजनादिप्रतिक्षेपः क्रियते, कृतकृत्यत्वप्रदर्शनायेत्यर्थः । 'स एष नेति नेत्यात्मा' इति श्रुतिं व्याचष्टे— य आत्मेति । विश्वदृश्येति । मूर्तामूर्तोपलक्षितस्य सर्वस्यापि प्रपञ्चस्य नेति नेतीति निषेधमुखेन तदधिष्ठानभूत आत्मा व्याख्यात इत्यर्थः । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुतिं व्याचष्टे— यस्मेति । विधेयसमर्पककाष्ठाशब्दापेक्षया पुरुषलक्षणेति स्त्रीलिङ्गनिर्देशः । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतिं व्याचष्टे— यस्त्वदुदाहृतेति । 'तद्यथाहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' इति श्रुतिं व्याचष्टे— अत्र ब्रह्मेति । न संसरतीति । नाभिमानं करोतीत्यर्थः । वल्मीकग्रहणमुपलक्षणमित्याशयेनाह— वल्मीकादाविति । अनभिमता अभिमानाविषयीकृता । त्यक्तत्वचा संयुक्तोऽपि मार्गगत्या तत्र प्रविशन्नपि । जीवनमप्युपाधितादात्म्याध्यासमन्तरेण सत्त्वमेव, तत्तादात्म्ये तन्मरणेन मरणापत्त्या जीवनायोगादित्याशयेनाह— निरुपाधिरिति । 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति श्रुतिं व्याचष्टे— परमार्थेति ॥

नारायणेन्द्रयोगीन्द्रगुर्वनुग्रहयोगतः ।
संसेव्य कल्पकतरुं प्राप्तोऽस्मि परमां स्थिराम् ॥

इति श्रीमन्महीधरकुलजलधिकौस्तुभकोण्डुभट्टमहोपाध्यायतनूभवेन
श्रीमन्नारायणेन्द्रगुरुचरणकटाक्षनिक्षेपकोशगृहायमाणेन
लक्ष्मीनृसिंहचरणारविन्दचञ्चरीकेण लक्ष्मीनृसिंहेन
विरचितायां कल्पवृक्षप्रदीपिकायामाभोगाख्यायां
प्रथमाध्याये चतुःसूत्री समाप्ता ॥

**Vedantasara of Sadananda** with the commentary of Apadeva and a critical English Introduction by Prof. K. Sundararama Aiyar, M.A. Cr. 8vo. Cloth. 1 8

**Bhagavad Gita** with the commentary called '*Brahmanandagiri*' of Venkatanatha. An excellent Advaitic commentary. Cr. 8vo. pp. 614 Cloth. 4 0

**Taittiriyopanishad Bhashya** of Sri Sankara Bhagavatpadacharya with the commentary called *Vanamala* by Achyuta Krishnanandatirtha Royal 8vo. pp. 86–270. Cloth. 4 0

**Siddhantakalpavalli** with the commentary called 'Kesaravalli' by Sri Sadasivendra Sarasvati Cr. 8vo. 0 8

**Vyasatatparya Nirnaya** by Ayyanna Dikshita. Cr. 8vo. 0 8

**Sarva Vedantasiddhantasarasangraha** by Sri Sankara Bhagavatpadacharya Cr. 8vo. 0 8

**Srutimatoddyota** by Tryambaka Sastri. Cr. 8vo. 0 8

**Advaitasiddhanta Vaijayanti** by Tryambaka Sastri 0 8

*SRI VANI VILAS PRESS,*

SRIRANGAM.